तयत्प्रकल्प्यते। तादृगन्यव्यपोहाय परिसङ्ख्यानुसास्मृता ॥ प्रमाणान्तरावगतमपिवस्तुशब्दे नप्रतिपादितम्प्रयोजनान्तराभावात्सदृशवस्त्वन्तरव्यवच्छेदाययत्पर्यवस्यति साभवेत्परिसङ्ख्या ॥ अत्रकथनप्रश्नपूर्वकंतदन्यथाचपरिदृष्टंतथोभयत्रव्यपोह्यमानस्यप्रतीयमानतावाच्यत्वश्चेतिचत्वारोभेदा ।क्रमेणोदाहरणम् । किमासेव्यंपुसासविधमनवद्यद्युसरित किमेकान्तेध्येयचरणयुगलकौस्तुभभृत :। किमाराध्यपुण्यंकिमभिलषणीयञ्चकरुणायदासक्त्याचेतोनिरवधिविमुक्तौप्रभ ति ॥ किम्भूषणसुदृढमत्रयशोनरत्नंकिंकार्यमार्यचरितसुकृतनदोष । किंचक्षुरप्रतिहतधिषणानत्रजानातिकस्त्वदपर सदसद्विवेकम् ॥ कौटिल्यकचनिचयेकरचरणाधरदलेषुरागस्ते । काठिन्यकुचयुगलेतरलत्वनयनयोर्वसति ॥ भक्तिर्भवेनविभवेव्यसनशास्त्रेनयुवतिकामास्त्रे । चिन्तायशसिनवपुषिप्राय ' परिदृश्यतेमहतामिति ॥

परिसङ्ख्यानम् । न० गणनायाम् ॥

परिसङ्ख्याविधि . । पुं० उभयोश्चयुगयत्प्राप्तावितरव्यावृत्तिपरेविधौ॥ यथा । पञ्चपञ्चनखाभक्ष्याइति । इदंहिवाक्यनपञ्चनखभक्षणपरम् । तस्यरागतः प्राप्तत्वात् । नापिनियमपरम्पञ्चनखभक्षणस्ययुगयत्प्राप्ते पक्षेऽप्राप्त्यभावात्। अतइदमपञ्चनखभक्षणनिवृत्तिपरमितिभवतिपरिसङ्ख्याविधि ' । साचद्विविधा । श्रौतीलाक्षणिकीच । तत्र अत्रैवावयववतीतिश्रौतीपरिसङ्ख्या । एवकारेणपवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात् ।पञ्चपञ्चनखाभक्ष्याइतितुलाक्षणिकीइतरनिवृत्तिवाचकपदाभावात् । अतएवैषात्रिदोषग्रस्ता । दोषत्रयञ्च । श्रुतहानि ' अश्रुतकल्पनाप्राप्तवाधश्चेति । तदुक्तम् । श्रुतार्थस्यपरित्यागादश्रुतार्थस्यकल्पनात् । प्राप्तस्यवाधइत्येवपरिसङ्ख्याचिदूषणेति ॥ श्रुतस्यपञ्चनखभक्षणनिवृत्तेः कल्पनात्प्राप्तस्यचपञ्चनखभक्षणस्यवाधनादिति । अस्मि श्चदोषत्रयशब्दनिष्ठप्राप्तवाधस्त्वर्थनिष्ठइतिदिक् ॥

परिसमाप्ति . । स्त्री० निश्चये ॥

परिसर : । पु० पर्यन्तभूमौ । नदीनगरपर्वतादेरुपान्तभूमौ ॥ परित . सरन्त्यत्र । सृगतौ । पुसीतिघ . ॥ मृत्यौ । विधौ ॥ देवे ॥

परिसरणम् । न० सर्वतोगमने ॥ सृगतौ । ल्युट् ॥

परिसरा । स्त्री० नाड्यां ॥

परिसर्प्पः । पु० परिक्रियायाम् । परिजनादिनावेष्टने ॥ परिसमन्तात् सर्पणम् । सृप्लृगतौ । घञ् ॥

परिसर्प्पणम् । न० प्रसरणे ॥ परिसर्प्पे ॥

परिसर्य्या । स्त्री० परीसारे । सर्वतोगमने ॥ परिसरणम् । सृ० । परिचर्यापरिसर्यामृगयाटाट्यानामुपसङ्ख्यानमितिशप्रत्ययोयक्गुणौच-निपातनात् ॥

परिसीमा । स्त्री० क्षयत्तायाम् ॥ परित:सीमा ॥

परिस्कन्द । पुं० पराचिते । परपुष्टे ॥ परिस्कन्दति । स्कन्दिर्० । प० अच् । परेश्चेतिपक्षेषत्वाभाव ॥

परिस्तरणम् । न० आच्छादने ॥

परिस्तोम । पुं० गजपृष्ठस्थचित्रकम्बले । प्रवेण्याम् । वर्णे । कुथे ॥ परिस्तूयते । ष्टुञ्० । अर्त्तिस्तुस्विति मन् ॥ यद्वा । परिगत: स्तोमोऽत्र वर्णस्तोमत्वात् । यत्क्रियायुक्तादृति परे.स्तौतिप्रतिअनुपसर्गत्वान्नष: ॥

परिस्पन्द: । पुं० कुसुमप्रकारादे: पत्रावल्यादेश्वरचनायाम् ॥ शिखास्थमाल्ये ॥ परिवारे ॥ परिस्पन्दनम् । स्पदि० । भावे अधिकरणेवा घञ् ॥

परिस्पन्दनम् । न० सर्वतोभावेनकम्पने ॥

परिस्पन्दमान: । त्रि० सर्वतोभावेन कम्पमाने ॥

परिस्फुट: । त्रि० प्रसिद्धावयवार्थे ॥

परिस्फुरित: । त्रि० प्रकाशिते ॥

परिस्रुत् । स्त्री० वरुणात्मजायाम् । मदिरायाम् ॥ परित . स्रवति । स्रु० । क्विप्तुकौ ॥

परिस्रुत . । त्रि० स्यन्ने । स्रवयुक्ते ॥ परित: स्रूयतेस्म । स्रु प्रस्रवणे । गत्यर्थेतिक्त ॥

परिस्रुता । स्त्री० वारुण्याम् । मदिरायाम् ॥ परित:स्रवति । स्रु० । क्विप्० तुक् । भागुरिमते । टाप् ॥ यद्वा । परित: स्रूयतेस्मलोकै . । स्रु० । गत्यर्थेतिक्त: ॥

परिहापित: । त्रि० त्याजिते ॥

परिहार: । पु० अनादरे ॥ परिक्रियते ऽनेनात्रवा । हृञ् । घञ्० । उपसर्गस्येति पाक्षिकोदीर्घाभाव: ॥

परिहार्य्य । पुं० वलये ॥ त्रि० । त्याज्ये ॥

परिहास: । पु० नर्मवाक्ये । परीहास-सैठट्टा इतिभाषा ॥ परिहसनम् । हसेहसने । घञ् ॥

परीक्षक: । त्रि० निरूपके । कारणिके ॥ शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षे । प्रतिपादके ॥ परीक्षते । ईक्षदर्शने । ण्वुल् ॥

परीक्षणम् । न० परीक्षायाम् । राज्ञा

धर्मकामार्थभयैरमात्या देर्भावतत्त्व निरूपणे । यथा । भेदोपजापा बुप धाधर्माद्यै र्यत्परीक्षणम् । इति ॥ सर्वतोभावेनदर्शने ॥ संशय्यपूर्वपक्ष निराकरणेनोत्तरपक्षव्यवस्थापने ॥ परित ईक्षणम् ॥

परीक्षा । स्त्री० विचारणायाम् ॥ परि तईक्षणमनया । ईक्ष० । गुरोश्चेत्य. । टाप् ॥ दिव्ये ॥

परीक्षित् । पु० नृपविशेषे ॥ अभिम न्यु सुते । विष्णु राते ॥ सयुधिष्ठि रानन्तरकलियुगस्यारम्भे चक्रवर्त्ती- राजावभूव । सएवलोकविख्यात : परीक्षिदितियत प्रभु' । पूर्वदृष्ट- मनुध्यायन परीक्षेतनरेष्विह ॥

परीक्षित । पु० परीक्षिति । अभिमन्यु पुत्रे नृपे ॥ यथा । परिक्षीणेषुवंशे षुजातोयस्मादर.सुत: । तस्मात्परी क्षितोनाम विख्यात' पृथिवीतले इ० देवीभागवतम् ॥ त्रि० । सञ्जा तापरीक्षायस्यता० इतच् ॥

परीक्ष्यकारी । त्रि० सम्यग्हेतुभिर्विमृ श्यकरणशीले ॥

परीत' । त्रि० परिवेष्टिते ॥ व्याप्ते ॥

परीतत् । त्रि० सर्वतोभावेनविस्तृ- ते ॥

परीप्सा । स्त्री० त्वरायाम् ॥ अपादा नेपरीप्सायामितिदर्शनात् ॥ प्राप्तु मिच्छायाम् ॥ पर्याप्तुमिच्छायाम्

परीप्सु । त्रि० जिघ्ना सौ॥ आप्नो- ते . सन्नताद्प्रत्यय . । आप्ज्ञप्- धामीदित्तीकार । अचलोपोभ्या- सस्येत्यभ्यासलोप ' ॥

परीभाव । पु० तिरस्क्रियायाम् अनादरे ॥ परीभुवोवज्ञानइति०- भावेघञ् । वृद्धि । उपसर्गस्यघञी तिदीर्घ ॥

परीरम् । न० फले ॥ पृणाति । पृपा- लनपूरणयो । कृशृपृकटिपटिशौ टिभ्यइरन् ॥

परीरण: । पुं० कमठे ॥ दण्डे ॥ प- ट्टशाटके ॥ इतिमेदिनी ॥

परीरम्भ . । पु० आलिङ्गने । परिर- म्भे ॥

परीवर्त्त: । पु० प्रतिदाने । निमये । नैमेये ॥ परिवर्त्तनम् । वृतु० । भावे घञ । उपसर्गस्येतिदीर्घ: ॥

परीवाद' । पु० अपवादे । निन्दा- याम् ॥ परिपूर्वाद्वदेर्भावेघञ् । उप सर्गस्यघञीतिदीर्घ । विद्यमान दोषस्याभिधानपरीवाद । अवि- द्यमानदोषाभिधाननिन्देतिविवे- क: ॥ यथा । परीवादस्तथ्योभवतु वितथोवापिमहतांतथाप्युच्चै र्धाम्ना हरतिमहिमानजनरव तुलोत्तीर्णं स्यापिप्रकटनिहताशेषतमसोरवे- स्तादृक्तेजोनहिभवतिकन्यागतव- त : ॥

परीवाप । पुं० पर्य्युप्तौ॥सलिलस्थाने परिवारे ॥ परिवपनम् अनेनात्रवा । टुवप्० । भावेघञ् हलश्चेतिवा । उपसर्गस्येतिदीर्घ ॥

परिवारः । पुं० परिजने ॥ खड्गकोषे ॥ परिच्छदे । शोभाजनके उपकरणे छत्रचामरादौ । सभ्यजनादौच ॥ परिवार्यते ऽनेनपरिवारणवा । घञ् । उपसर्गस्येतिदीर्घ. ॥

परीवाहः । पु ० जलोच्छ्वासे । परिवाहे ॥ परिवहन्त्यनेभि. । वह० । हलश्चेतिघञ उसपर्गस्यघञीति पाक्षिकोदीर्घ ॥ परिवहनम् । भावेवा० घञ् ॥ मरीभूद्योग्यवस्तुनि

परीष्टि । स्त्री० अन्वेषणायाम् ॥ इषेरनिच्छार्थस्यपरेर्वेतिपक्षेक्तिन् । परिचर्य्यायाम् ॥ प्राकाम्ये ॥ परीसारः परिसर्य्यायाम् । सर्वतोगमने ॥ परिसरणम् । सृ० । घञ् उपसर्गस्यघञीतिदीर्घः ॥

परीहारः । पुं ० अवज्ञायाम् । अनादरे ॥ परिहरणम् । हृञ्० । भावेघञ् । उपसर्गस्येतिपाक्षिकोदीर्घः॥

परीहासः । पु० द्रवेकेलौ । नर्मणि ॥ परिहसनम् । हसि० । घञ् । पाक्षिकोदीर्घ . ॥

परुः। पुं० वंशादिपर्वणि ॥ पिपर्त्ति । पॄ० । बाहुलकादुः ॥

परुत् । अ० पूर्ववत्सरे । गतवर्षे ॥ पूर्वस्मिन्वत्सरेइत्यर्थे । सद्यःपरुदितिपूर्वस्यपरभावः उत्०च । सवत्सरे ॥

परुत्न . । त्रि० पूर्ववर्षभवे ॥ परुद्भवः । चिरपरुत्परारिभ्यस्त्नोवक्तव्य ॥

परुश्वारः । पुं० घोटके ॥

परुट । पु० पर्वणि ॥ यत्परुषिदिनमितिश्रुतौपरुःषपर्वर्णा.रूःर्थात् ॥

परुषम् । न० निष्ठुरवाक्ये ॥ नीलझिण्टाम् ॥ परूषफले ॥ न० । तिलकवृक्षे ॥ त्रि ० कर्बुरे॥ रूक्षे ॥ निष्ठुरोक्तौ । परेषादेशजातिकुलविद्याशिल्परूपवृत्त्याचारपरिच्छदशरीरकर्मजीविनांप्रख्यत्तदोषवचनम् परुषमितिवदन्त ॥ पश्चान्यत्क्रोधसन्तापत्रासससञ्जननपरुः। परुषत त्रविज्ञेयश्चान्यश्चतथाविधम् ॥ चक्षुघ्नित्तिलुप्ताश्चचण्डालश्चाक्षणोच । प्रशसानिन्दनश्चैषत्परुषाश्चविशिष्यतेइतिदेवल . ॥ परुषवचनानामेवपरोक्षमुदाहरणमपवादइत्याहः ॥ निष्ठुरवाग्युक्ते ॥ पिपर्त्ति पूर्थतिचलंवृद्धिकरोति । पॄ० । पॄनहिकलिभ्यउषच् ॥

परुषा । स्त्री० वृत्त्यनुप्रासघटकवृत्तिभेदे ॥ ओजःप्रकाशकैर्वर्णैःपरुषाख्यास्मृतापरा ॥ वामनादिमतेगौडीप्येया ॥

परु । न० ग्रन्थौ । वंशादिपर्वणि ॥ पिपर्त्ति । पूपालनपूरणयो । अर्त्ति पृवपीभ्युस् ॥

परुषम् । न० फलवृक्षभेदे । अल्पाऽस्थिनि । नीलचर्मणि । परुसाइति च फालसा० इतिचभाषा० ॥

परुषकम् । न० परुषे ॥ परूषकंकषायाम्लमामपित्तकारलघु । तत्पक्वमधुरपाकेशीतविष्टम्भिवृंहणम् ॥ हृद्यहृद्पित्तदाहास्रज्वरक्षयसमीरहृदितिभावप्रकाश ॥

परेण । अ० परतोर्थे ॥ विभक्तिप्रतिरूपकमव्ययम् ॥

परेत । पुं० भूतान्तरे ॥ त्रि० । मृते ॥ परलोकमइत । ॥ परादूरमितोवा ॥

परेतर । त्रि० आत्मीये । अवञ्चके ॥ परादितर : ॥ स्वामिकार्यार्थमितरे शमेश्के ॥ परान्विपक्षान्इतरयतिभेदेनआत्मसात्करोति । तत्करोतीतिण्यन्तात्कर्म्मण्यण् ॥

परेतराट । पु० धर्मराजे । पितृपती । यमे ॥परेतेषुमृतेषुराजती । राजृ० । सत्सूद्विषेतिक्विप् । जान्त ॥

परेद्यवि । अ० परस्मिन्नहनि ॥ सद्यपरुदित्यादिनापरस्मादेद्यव्यहनिनिपात्यते ॥

परेपम् । त्रि० परापे ॥ परागताआपोयत्र । ह्यन्तरुपसर्गेभ्योपईदित्यअवर्णान्तादित्युक्तेः पाक्षिकाईत् ॥

परेष्टुका । स्त्री० बहुसूत्याम् । बहुपत्यायाङ्गवि ॥ परमिच्छतिपरैरिष्यतेवा । वा०तु । स्वा० क ॥

परैधित : । पुं० कोकिले ॥ त्रि० । पराचिते । औदासीन्येनपरपुष्टे ॥ परैरेधित समृवर्द्धित ॥

परोक्ष । पुं० तपस्विनि ॥ त्रि० । इन्द्रियाविषये । अप्रत्यक्षे ॥ परोक्षमस्त्यस्य । अर्शआद्यच् ॥ अत्रातु । परोभाव . परस्याक्षेपरोक्षेलिटि इष्यताम् । उक्तवादे पराद्दक्षा . क्षिडशास्मान्निरातनात् ॥ अस्मात्परोक्षलिडितिनिर्द्देशात् ॥

परोक्षम् । अ० इन्द्रियाविषये ॥ इक्षिविषयेऽक्षिशब्दइन्द्रियमात्रपर । अक्ष्ण ' परमितिविग्रहेशरदादिषुप्रतिपरेतिसमासान्तविधानसामर्थ्यादव्ययीभाव ' । परोक्षेलिडिति निपातमात्परस्यौकारादेश ॥ पारस्करादित्वात्सुडित्यप्याहु: ॥ श्री भोजस्तुपरार्थेपरःशब्द मन्यते ॥

परोपकार. । पुं० परस्यपरेषावाउपकृतौ । अन्यसम्बन्धिहिते । दधीचिनापुरागीत . श्लोकश्श्रूयतेभुवि । सर्वधर्ममय . सार . सर्वधर्मज्ञसम्मत ॥ परोपकार : कर्त्तव्य' प्राणै : कण्ठगतैरपि । परोपकारजंपुण्यंतुल्यक्रतुशतैरपीतिपाद्मोत्तरख

ग्डे १२ अध्याय : ॥
परोवरीण : । त्रि० योऽपिपरांश्चअव
रांश्चअनुभवतितस्मिन् ॥ परोवरपर-
म्परपुत्रपौत्रमनुभवतीतिख ' । अ
वरस्यादेरुत्वनिपात्यते । गुण : ॥
परोवरीयान् । त्रि० उत्तरमुत्तरंश्रेष्ठाद
पिश्रेष्ठे ॥ पुं० । परम्परवरीयस्तु
गुणवतिप्राणे ॥
परोष्णी । स्त्री० तैलपायिकायाम् ।
मुखविष्ठावागुलिकादिनामिकाया
म् । चटिकाविशेषे ॥ परमत्र उष्णा
यस्या. । गौ०ङी ॥
पर्कटि : । स्त्री० प्लक्षवृक्षे ॥
पर्कटी । पु० प्लक्षवृक्षे । जटिनि ॥
कमण्डलुतरौ ॥ पाकरि० इतिभा
षा ॥
पर्कटी । स्त्री० प्लक्षवृक्षे । पाकरि ०
वृ० भा० प्र० ॥ पूगादेर्नूतमेफले
॥ पृच्यते पृथी० । वा० कट : ।
गौ० ङीष् ॥
पर्ज्जनी । स्त्री० दारुहरिद्रायाम् ॥ पि
पर्त्ति । पॄ० विच् । परश्चासौजनी
च ॥ परम्पालकास्वास्थ्यंजनयति
वा।जनी ० ॥ यण्णन्तः । कर्मण्यण् ॥
पर्ज्जन्य ' । पु० मेघशब्दे ॥ ध्वनदम्बु
दे ॥ शक्रे ॥ पिपर्त्ति । पर्षतिवा ।
पॄ० । पृषुसेचनेवा । पर्जन्य इ० साधु:
॥ वृष्ट्यात्मकेदेवे ॥ पर्जन्योनाम वृ
ष्ट्युपकरणाभिमानिनी देवताविशे
ष इतिछान्दोग्यभाष्यम् ॥ मेघसा
मान्ये ॥ यज्ञाद्भवतिपर्जन्य: ॥सूर्ये ॥
स्वगोभिर्भौमुमारेभेपर्ज्जन्य : का
लआगते ॥
पर्ज्जन्यवर्ष : । पुं इन्द्रे ॥
पर्ज्जन्या । स्त्री० दारुहरिद्रायाम् ॥
पर्ण : । पुं० वातपोथे । पलाशे ।
किंशुके । ढाक० इ० भा० ॥
॥ पिपर्त्ति । पॄ० । धापॄवस्यज्यति
भ्योन : ॥ यद्वा ॥ पर्णयति पर्णह
रितभावे । अच् ॥ न० । पत्रे ॥
ताम्बूले ॥ यथा । अनिधायमुखे
पर्णं पूगस्वादयतेनर ' । मतिभ्रंशो
दरिद्र: स्यादन्ते नस्मरतेहरिम् ॥
पर्णकृच्छ्र. । पु० पत्रकृच्छ्रव्रते ॥ यथा ।
पर्णोदुम्बरराजीवविल्वपत्रकुशोदकै: ।
प्रत्येकंप्रत्यहाभ्यस्तै: पर्णकृच्छ्रउदा
हृत: ॥ इतिगरुडपुराणम् ॥
पर्णखण्ड : । पुं० वनस्पतौ ॥ ताम्बू
लेकांशे ॥
पर्णचोरक : । पुं० चोरकनामगन्ध
द्रव्ये ॥
पर्णध्वत् । त्रि० पर्णध्वंसकर्त्तरि ॥
पर्णनर: । पुं० पित्रादिशवास्थ्यलाभेदा
हार्थंतत्प्रतिनिधिभूतशरपलाशपत्र
रचितोर्णातन्तुवेष्टितयवपिष्टलिप्तन
राकारेपुत्तलके ॥
पर्णभेदिनी । स्त्री० प्रियङ्गौ
पर्णभोजन: । पु० छागले ॥ पर्णानि

भोजनयस्य ॥ त्रि० । पत्रभक्षके ॥
पर्णमाचालः । पुं० कर्मरङ्गवृक्षे ॥
पर्णमृगः । पुं० वानरादिमृगगणविशेषे ॥ यथा । वनौकोवृक्षमार्जार वृक्षमर्कटिकादयः । एतेपर्णमृगाः प्रोक्ताः सुश्रुताद्यैर्महर्षिभिः ॥ स्मृताः पर्णमृगावृष्याश्चक्षुष्याः शोषिणेहिता । श्वासार्शःकासशमनाः सृष्टमूत्रपुरीषका इतिभावप्रकाश.॥
पर्णलता । स्त्री० नागवल्ल्याम् ॥
पर्णवल्ली । स्त्री० पलाशीलतायाम् ॥
पर्णशाला । स्त्री० उटजे । मुनिगृहे ॥ पर्णनिर्मिताशाला । शाकपार्थिवादिः ॥
पर्णसि । पु० पद्मजे । पद्मे ॥ जलगृहे ॥ पृणोति । पृप्रीतौ । सानसिवर्णसि पर्णसीत्यादिनाऽसिप्रत्यय. पृणोतेर्नुक्च ॥
पर्णाशन । पुं० घने । मेघे ॥
पर्णास । पुं०स्वल्पपत्रतुलस्याम् । कठिञ्जरे ॥ पर्णान्यस्यति । असु० । कर्मण्यण् ॥ यद्वा पर्णै रसति । अ सदीप्तौ । पचाद्यच् ॥
पर्णी । पुं० द्रुमे । वृक्षे ॥
पर्णिनी । स्त्री० माषपर्ण्याम् ॥
पर्णोटजम् । न० उटजे । पर्णशालायाम् ॥
पर्द्द . । पुं० अपानोत्सर्गे । कुत्सितशब्दे । गुदरवे ॥ पर्द्दते ॥ पर्द० । प० अच् ॥
पर्द्दनम् । न० पर्द्दे । पाद० इ०भा० ।
पर्प्प । पु० पङ्गुपीठे । येनकाष्ठेन पङ्गुश्चरतितस्मिन्काष्ठे ॥ पर्प्पगतौ । इलस्येतिकरणे घञ् ॥ न० । नवतृणे ॥ गृहे ॥ शिपर्त्ति । पृ० । खष्पशिल्पशष्पेत्यादिनापप्रत्ययान्त साधुः ॥
पर्प्पट . । पु० पितपातड़ा० इ० भा० भेषजान्तरे । कवचे । तिक्ते ॥ पर्पटो वरतिक्तश्चस्मृत पर्पटकश्चस । कथितः पांशुपर्यायस्तथा कवचनामक . ॥ पर्पटोहन्तिपित्तास्रभ्रमतृष्णा कफज्वरान् । सङ्ग्राही शीतलस्तिक्तोदाहनुद्वातलोलघु इतिभाव प्रकाश ॥ पापड़० इ०भा० पिष्ट प्रभेदे ॥ धूमसीरचिताहिङ्गु हरिद्रा लवणैर्युताः ॥ सर्जिकाजीरकाभ्या स्तनूकृत्यचवेल्लिता ॥ पर्पटास्ते सदङ्गारभृष्टा परमरोचका. । दीपना . पाचनारूक्षागुरव . किञ्चिदीरिता ॥ मौद्गाश्चतद्गुणाः प्रोक्ता विशेषाल्लघवोहिता ः । चणकस्यगुणैर्युक्ता . पर्पटाश्चणकोद्भवा ॥ स्नेहभृष्टास्तुतेसर्वे भवेयुर्मध्यमागुणै रितिभावप्रकाशः ॥
पर्प्पटक . । पुं० कवचे । तिक्ते । पर्पटे ॥
पर्प्पटद्रुम . । पुं० कुम्भीवृक्षे ॥

पर्प्पटी । स्त्री० सौराष्ट्रमृत्तिकायाम् ॥ पिष्टप्रभेदे । पापडी० इ० भा०॥ उत्तरदेशभवसुगन्धिद्रव्ये । पपरी० इ० भा० । रञ्जन्याम् । चक्रवर्त्तिन्याम् ॥ अस्यागुणा यथा । पर्पटी तुवरातिक्ताशिशिरावर्णकृल्लघु । विषव्रणहरीकण्डूकफपित्तास्रकुष्ठनुत् ॥

पर्प्परीक । पु० सूर्य्ये ॥ वह्नौ ॥ भूपे ॥ पिपर्त्ति । पृ० । अपृणुआदेरुक् चाभ्यासस्येतिईकन् । धातोर्हित्त्व रुक्चाभ्यासस्य ॥ वेदभाष्येतुपृ पालन पूरणयोरस्य निपातनमिदमाश्रित्यस्तोतॄणां पालक० इ० व्याख्यातं ॥

पर्प्परीणः । पुं० पर्णस्य शिरायाम् ॥ द्यूतकम्बले ॥ पर्ण चूर्णरसे ॥ न० पर्वणि ॥ इतिमेदिनी ॥

पर्प्पिकः । पुं० पङ्गौ ॥ खञ्जे ॥ पर्पेण चरति । पर० ॥ स्त्री पर्प्पिकी ॥ षित्त्वान्ङीष् ॥

पर्फरीकम् । न० किसलये ॥ स्फुरति । स्फुरस्फुरणे । पर्फरीकादयश्चेति ईकन्धातोपर्फरादेशश्च ॥ यद्वा । धातोर्द्वित्त्वम् । उकारस्याकारःसलोपः रुक्चाभ्यासस्य । वेदभाष्ये तु जिफलाविशरणेस्यनिपातनमाश्रित्यशत्रूणां विदारयितेतिव्याख्यातम् ॥

पर्य्यङ्क । पुं० मञ्चे । माचा० इ० भाषा ॥ पल्यङ्क० पलङ्गः इ०भाषायाम् । ऋषीणामासने ॥ पर्य्यस्तिकायाम् खाट० भा० ॥ परितोऽङ्कयते । अकिलक्षणे घञ् ॥

पर्यङ्कपादिका । स्त्री० कोलशिम्व्याम् ॥

पर्य्यक् । त्रि० परितोर्थे ॥

पर्य्यटनम् । न० भ्रमणे । व्रज्यायाम् । अटाट्याम् । फिरना० इ० भाषा अट० परिपूर्वः । भावेल्युट् ॥

पर्य्यनुयोग । पुं० जिज्ञास याम् ॥ इतिहास युध ॥ दोषविशेषे ॥

पर्यनुयोज्योपेक्षणम् । न० निग्रहस्थानप्राप्तस्यनिग्रहे ॥ निग्रहस्थानप्राप्तवतोऽनिग्रह निग्रहनिग्रहस्थानानुद्भावनमित्यर्थः । यत्रत्वनैकनिग्रहस्थानपाते एकतरोद्भावनतत्रनपर्यनुयोज्योपेक्षणम् । अवसरेनिग्रहस्थानोद्भावनत्त्वावच्छिन्नाभावस्यैवतत्त्वात् । ननुवादिनाकथमिदमुद्भाव्यस्वकौपीनविवरणस्यायुक्तत्त्वादिति चेत्सत्यम् । मध्यस्थैनैवेदमुद्भाव्यम् । वादेचस्वयमुद्भावनेऽप्यदोष : ॥

पर्यन्त । पुं० अन्त्यसीमायाम् । प्रान्तदेशे ॥ परितोऽन्त : ॥ समीपे ॥

पर्य्यन्तभू : । स्त्री० नदीनगरादिसमीपभूमौ । परिसरे । पर्य्यन्तभू : ॥

पर्यन्तिका । स्त्री० गुणभ्रंशे ॥

| पर्य्यायम् | पर्याय . |
|---|---|

पर्य्यय । पुं० व्यतिक्रमे । क्रमोल्लङ्घने । शास्त्रतोलोकव्यवहाराच्चप्राप्तस्यार्थस्यपरित्यागे । अतिपाते । उपात्यये ॥ पर्य्ययणम् । इण् गतौ । एरच् ॥

पर्य्ययणम् । नं० अश्वसज्जायाम् । जीन० इ० भाषा० पलानइतिच ॥

पर्य्यवसानम् । न० चरमे ॥ शेषान्तकर्मणि ॥ पर्य्यवपूर्व . । ल्युट् ॥

पर्य्यवसित । त्रि० पर्य्यवसानप्राप्ते ॥

पर्य्यवस्था । स्त्री० विरोधने ॥ पर्य्यवस्थानम् । स्था० । आतश्चोपसर्गेऽङ् ॥

पर्य्यवस्थाता । त्रि० शत्रौ । विरोधिनि ॥ पर्य्यवतिष्ठति । स्था० । तृच् ॥ पर्यवरोधरि ॥

पर्यवस्थानम् । न० विरोधे ॥ स्था० । ल्युट् ॥ सर्वतोभावेनावस्थितौ ॥

पर्य्यश्रु . । त्रि० परिगतानन्दवाष्पे ॥

पर्य्यस्त . । त्रि० पतिते । हस्ते । ढेपडा० इतिभा० ॥ हते ॥ परितोऽस्त ॥ परिक्षिप्ते । सर्वत. प्रसृते ॥ त्रिप्ते ॥

पर्य्यस्तिका । स्त्री० खट्वायाम् ॥

पर्य्याचान्तम् । न० एकपङ्क्तिस्थान्यान्यानवमन्ययचान्नेभुज्यमानेकेनचिदाचमनक्रियतेतदन्नपर्याचान्तमुच्यते ॥

पर्य्याणम् । न० पल्ययने । घोडेकापलान० इ० भा० ॥ वङ्कायभागे० इ० चि० शि० ॥

पर्य्याधाता । पुं० आहिताग्नौकनिष्ठे ॥ यथा । सोदर्येतिष्ठतिज्येष्ठेयअन्याधानकरोतिहि । तयो पर्याहितोज्येष्ठ . पर्याधाताकनिष्ठक. ॥

पर्य्याप्तम् । न० यथेष्टे । निकामे ॥ निवारणे ॥ त्रि० । तृप्ते ॥ शक्ते ॥ कार्यकारणदक्षे ॥ परिमिते ॥ आप्लृव्याप्तौ । परिपूर्व । भावे० क्त ' ॥ प्राप्तौ ॥ तृप्ताविर्तिमेदिनिकार . ॥

पर्य्याप्ति: । स्त्री० प्रकामे ॥ प्राप्तौ ॥ रक्षणे । मारणोद्यतस्यनिवारणे ॥ पर्यापनम् । पर्याप् ।तिस्त्रायार्थे ' । क्तिन् ॥ सामर्थ्ये ॥ स्वरूपसम्बन्धविशेषे ॥ सचसर्वेषामेवपदार्थानांविशिष्टबुद्धिनियामक ' । पदार्थभेदेननाना । यथा । पर्याप्तिस्त्रायमेकोघटइमौद्वावित्यादिप्रतीतिसाक्षिका स्वरूपसम्बन्धविशेषइतिदीधिति । समवायेनगुणे गुणस्यासत्त्वेपिचत्वारोगुणाइत्यादिप्रतीत्यागुणादिषुसङ्ख्यादिमत्त्वनियामकोपिताद्दशसम्बन्ध । इतिसामान्याभावेजगदीश . । द्वितीयवादेगदाधरभट्टाचार्यश्च ॥

पर्याय . । पुं० प्रकारे ॥ अवसरे ॥ क्रमे । आनुपूर्व्याम् । परिपाट्याम् । अनुक्रमे । वारी० इ० भा० ॥ निर्माणे ॥ द्रव्यधर्मे ॥ क्रमेण कार्यवाचका : शब्दा ' पर्याया : इतिविजय

पर्याय '

रचित ' ॥ सम्पर्कविशेषे ॥ येनस-
हयत्सम्पर्कः सम्बन्धस्तेनसहतत्-
पर्यायः । यथा । समान कुलभाव
स्वदानादानन्तथैवच । तयोर्वंशस-
मानञ्चपर्यायश्चप्रचक्षते ॥ इतिकु-
लदीपिका ॥ अलङ्कारवि० । यथा।
एकक्रमेणानेकस्मिन्पर्याय । एक
वस्तुक्रमेणानेकस्मिन्भवतिक्रियते-
वासपर्याय । क्रमेणोदाहरणम् ।
श्रोणीभारस्त्यजतितनुतांसेवतेमध्य
भागः पद्भ्याभुक्तास्तरलगतय ।
सश्रितालोचनाभ्याम् । धत्ते वक्षः
कुचसचिवतामद्वितीयस्त्ववक्त्रम्तद्गा
त्राणांगुणविनिमयः कल्पितो-
यौवनेन ॥ यथावा । नन्वाश्रयस्थि-
तिरियतवकालकूटकेनोत्तरोत्तरवि
शिष्टपदोपदिष्टा ॥ प्रागर्णवस्यहृद
येवृषलक्ष्मणोथकण्ठेऽधुनावससि
वाचिपुन . खलानाम् ॥ यथावा ।
बिम्बौष्ठएवरागस्तेतन्विपूर्वमदृश्य
त । अधुनाहृदयेप्येषमृगशावाक्षि-
दृश्यते ॥ रागस्यवस्तुतोभेदेपिएक
तया व्यवसितत्वादेकत्त्वमविरुद्धम् ॥
तत्ताणसिरिसहोअररअणाहरणम्मि
हिअअमेकरसम् । बिम्बाहरेपि
आण' निवेसिअंकुसुमवाणेन' ॥ * ॥
तत्तेषांश्रीसहोदररत्नाभरणे हृदय
मेकरसम् । बिम्बाधरेप्रियाणांनिवे
शितुंकुसुमवाणेनेतिसंस्कृतम् ॥

पर्यायशयनम्

श्रीसहोदररत्नकौस्तुभ आभरण-
यस्यतस्मिन्विष्णौएकरसमेकतान
न्तत्तेषांपातालवासिनामसुराणामि-
तिचण्डीदासव्हृदयम् । कुसुमवाणे-
नप्रियाणांकान्तानाबिम्बसदृशेऽधरे
विनिवेशितमित्यनेकत्रस्थितौप्रयो-
जकनिर्देशाद्दिद . ॥ अन्यस्ततोन्य-
था । अनेकमेकस्मिन्क्रमेणभवति-
क्रियतेवासोन्यः । क्रमेणोदाहरण
म् । मधुरिमरुचिरवचः खलाना-
ममृतमहोप्रथमपृथुव्यनक्ति । अथ-
कथयतिमोहहेतुमन्तर्गतमिवहालह
लविषन्तदेव ॥ तद्गेहनतभित्तिम-
न्दिरमिदलब्धावकाशदिव ' सावेनु
र्जरतीनदन्तिकरिणामेताघनाभाघ
टाः । सक्षुद्रोमुषल.ध्वनि. कलमि
दसङ्गीतकयोषितामाश्चर्यं द्विवसैर्द्वि
जोयमियतीभूमिसमारोपितः ॥ अ
त्रैकस्यैवहानोपदानयोरविवक्षितत्वा
न्नपरिवृत्ति ॥ * ॥ अपिचलक्षणा
न्तरम् । क्रमेणैकमनेकस्मिन्नाधारे
वर्ततेयदि । एकस्मिन्नथवानेकपर्या
यालङ्कृतिर्मतेति ॥ पर्ययणम् ।
इण० । परावनुपात्ययइणइतिघञ्
। व्यत्ययेपि ॥ यथा । प्राप्तः पर्याय
कालोव इतित्रस्याभ्यभाषतइति ॥
पर्यायशयनम् । न० उपशायै । विशा-
यै । प्रहरिकादीनांपर्यायेणक्रमेणश
यनम् ॥

पर्यायोक्तम् । न॰ अलङ्कारविशेषे ॥ पर्यायोक्तविनावाच्यवाचकत्वेन वस्तुयत् ॥ वाच्यवाचकभावव्यतिरिक्तेनावगमनव्यापारेणयत्प्रतिपादनं तत्पर्यायेणभङ्ग्यन्तरेणकथनात्पर्यायोक्तम् । उदाहरणम् । यस्त्व चिरदूढापिनिवासप्रीतिर्निजृम्भिता मदनैरावणमुखमानेनहृदयेहरे ॥ अत्रैरावणशक्रौमदमानमुक्तौजाता वितिव्यङ्ग्यमपिशब्देनोच्यते । नैनयदेवोच्यतेतदेवव्यङ्ग्ययथातुव्यङ्ग्यनतथोच्यतेयथागविशुक्लं चलति दृष्टेगौः शुक्लश्चलतीति विकल्पोय देवदृश्यतेतदेवविकल्पयति॰ नतुयथादृष्ट तथा॰ यतोभिन्नासंसृष्टत्वेनदृष्ट भेदसंसर्गाभ्याविकल्पयति ॥

पर्य्यासित । त्रि॰ पर्य्यावर्त्तिते ॥

पर्य्याहार । पु॰ वीवधे । उभयतोबद्धशिक्ये स्कन्धवाह्ये काष्ठविशेषे । कांवडइतिबङ्गीइतिचभा॰ ॥ परितआह्रियतेऽनेन ॥

पर्य्याहित.। पुं॰ योऽग्रेऽग्न्याधानकरोतितस्यज्येष्ठे ॥ यथा । सोदर्येतिष्ठज्येष्ठेअग्न्याधानकरोतिहि । तयो. पर्य्याहितोज्येष्ठ. पर्याधाताकनिष्ठक. ॥

पर्य्युदञ्चनम् । न॰ उद्धारे । ऋणे ॥ परितउदच्यते । अञ्चु॰ । कृत्यल्युटइतिकर्मणिल्युट् ॥

पर्य्युदस्त । त्रि॰ पर्युदासविशिष्टे । विध्यन्वयिभेदात्मकनञर्थयुक्ते ॥

पर्युदास. । पु॰ प्रतिषेधभेदे ॥ प्राधान्यन्तुविधेर्यत्रप्रतिषेधेऽप्रधानता । पर्युदास सविज्ञेयोयत्रोत्तरपदेनन ञ् ॥ सामान्यशास्त्रप्राप्तनिषेधस्यैवपर्युदासत्वम् ॥ यथा । अमावास्यायाम्पितृभ्योदद्यात् रात्रौश्राद्ध नकुर्वीत । अत्रश्राद्धकरणे रात्रेः पर्युदास ॥ परिसर्वतोभावेनउदास्यतेविधिर्यत्रसपर्युदासइतिगौडा ॥

पर्युपयुक्त . । त्रि॰ समाप्ते ॥ यथा । आगमकालेनैवास्यायुक्तत्त्वपर्य्युपयुक्तस्यादितिमहाभाष्यम् । आगमकालेनविद्याग्रहणकालेन । अस्य-विद्यार्थिन । पर्य्युपयुक्तसमाप्तमिति तदर्थ ॥

पर्युषितम् । त्रि॰ रात्र्यन्तरितपक्वान्ने । व्युष्टे । बासी॰ इ॰ भाषा॰ ॥ यातयामगतरसपूतिपर्युषितञ्चयत् । उच्छिष्टमपिचामेध्यभोजनंतामसप्रियमितिभगवद्गीता ॥

पर्य्येषणा । स्त्री॰ अन्वेषणायाम् । ढूढणाइतिढूढइतिचभा॥ अन्यापर्येषणाचर ॥ तर्कादिनायथाबोधितधर्माद्यन्वेषणे ॥ इषगत॰ दि॰ । इषणाभीक्ष्ण्ये क्र्या॰ । आर्य्यांपरेवेंतिपक्षेयुच् । टाप् ॥

पर्व्वकम् । न॰जानुपर्वणि । घौंटूइति

जान इतिच भा० ॥

पर्व्वकारी । पु० धनादिलोभेनपर्वसु अमावास्याक्रियावर्तके ॥

पर्व्वगामी । पु ० पर्वसु स्त्रीगामिनि ॥

पर्व्वत । पु ० महीध्रे । शिखरिणि । क्ष्माभृति । अहार्ये । गोत्रे । गिरौ ॥ पर्व्वाणिसन्त्यस्य । तपपर्व्वमरुद्भ्याम् ॥ यद्वा । पर्व्वति । पर्वपूरणे । भृमृदृशियजिपर्व्विपच्यमितमिनमिहर्यभ्योऽतच् ॥ विंशतिश्चैषपर्वता यथा । हिमवान्हेमकूटश्चनिषधोनीजपर्वत ॥ श्वेतश्चभृङ्गवान् मेरुर्माल्यवान्गन्धमादन ॥ महेन्द्रोमलय सह्य शुक्तिमानृक्षमानपि । विन्ध्यश्चपारियात्रश्चकैलासो मन्दिरस्तथा ॥ लोकालोकोमहास्तेषु तथैवोत्तरमानस । एतेविंशति र्विख्याता पर्वतास्तस्युषांवरा : ॥ पाइपे । वृक्षे ॥ शाकप्रभेदे ॥ पावदा इ० गौ० भा० प्र० मत्स्यविशेषे ॥ देवर्षिविशेषे ॥

पर्व्वतकाक : । पु ० द्रोणकाके ॥

पर्व्वतज. । पु० गिरिसंभववस्तुनि ॥

पर्व्वतजा । स्त्री० पार्वत्याम् ॥ सरिति । नद्याम् ॥ द्राक्षावि० । पहाड़ी० दाख इ० भा० ॥ पर्वतात्जाता । जनी० । पञ्चम्यामिति ड : ॥

पर्वततृणम् । न० तृणविशेषे । तृणाढ्ये । मृगप्रिये ॥

पर्वतमोचा । स्त्री० अद्रिकदल्याम् ॥

पर्वतराज . । पु ० नगाधिराजेहिमाद्रौ । पर्वतानाराजा॥राजेतिटच् ॥

पर्व्वतराजपुत्री । स्त्री० उमायाम्।दुर्गायाम्।यथा । शक्रध्वजात्पच्चयुतेदृशाहेमूलसंयुक्तासितसप्तमीया । आरभ्यतस्मादशमीञ्चयावत् प्रपूजयेत्पर्व्वतराजपुत्रीमिति ॥

पर्व्वतवासिनी । स्त्री० आकाशमांस्याम् ॥ गायत्र्याम् ॥ काल्याम् ॥

पर्व्वताधारा । स्त्री० पृथिव्याम् ॥

पर्व्वतारि. । पु० इन्द्रे ॥ पर्व्वतानामरि ॥

पर्व्वतालय. । पु० वानरे ॥ पर्व्वतआलयोयस्य ॥

पर्व्वताशय: । पु ० मेघे ॥

पर्व्वताश्रय । पु ० शरभे ॥ त्रि० । पर्व्वतवासिनि ॥

पर्व्वाश्रयदेश. । पुं० देशविशेषेषु ॥ ते यथा । अतोदेशान्प्रवक्ष्यामिपर्व्वताश्रयिणश्चये । निर्हाराहसवर्णाश्चकुपथाअपथा:खशा ॥ कुथप्रावरणाश्चैव ऊर्णादर्भासमूद्दका । त्रिगर्त्तामिगडलाश्चैवकिरातश्चामरै . सह ॥ इ० तिमत्स्यपुराणम् ॥

पर्व्वतीय: । पुं० अक्षोटे ॥ पर्वतेभव । विभाषामनुष्य इतिपर्वेछ : ॥ त्रि० पर्वतोत्पन्नमनुष्यादौपर्वतोनिवासोऽस्य । पर्व्वताश्चेतिछ : ॥

पर्व्वधि । पु० हिमांशौ । चन्द्रे ॥

पर्व्व । न० उत्सवे । मध्ये ॥ ग्रन्थौ ॥ प्रस्तावे ॥ लक्षणान्तरे ॥ दर्शप्रतिपदोः सन्धौ ॥ विषुवत्प्रभृतिषु ॥ ग्रन्थविशेषे ॥ ग्रन्थसन्धौ ॥ यथा । महाभारतेऽष्टादशपर्वाणि । तानियथा आदि.सभावनविराटमथोद्यमश्चभीष्मोगुरुरविजमद्रवसौप्तिकश्च । स्त्रीपर्वशान्तिरनुशासनमश्वमेधव्यासाश्रमोमुषलयानदिवावरोहइतिमहाभारतटीका ॥ तिथिविशेषेषु ॥ चतुर्द्दश्यष्टमीकृष्णाचमावास्याचपूर्णिमा । पर्वाण्येतानिराजेन्द्ररविसङ्क्रमणतथा ॥ पर्वति०पर्वतेवा । पर्वपूरणे । वा० कनिन् ॥ यद्वा। पिपर्त्ति पृणातिवा ॥ पॄ० । स्नामदिपद्यर्त्तिपॄशकिभ्योवनिप् ॥ क्षणे ॥

पर्व्वपुष्पी । स्त्री० रामदूतीवृक्षे ॥

पर्व्वपूर्णता । स्त्री० आयोजने । सम्भारे ॥ पर्व्वणः पूर्णत्वे ॥

पर्व्वमूला । स्त्री० श्वेतायाम् ॥

पर्व्वयोनि । पुं० इक्ष्वादौ ॥ पर्वणियोनिरुत्पत्तिर्यस्य ॥

पर्व्वरुट् । पु० पिण्डपुष्पे । दाडिमे ॥

पर्व्ववल्ली । स्त्री० मालादूर्वायाम् ॥

पर्व्वसन्धि । पुं० प्रतिपत्पञ्चदश्योरन्तरे ॥ पञ्चदशीशब्देनपूर्णिमाऽमावास्ययोर्द्वयोर्ग्रहणम् । अतएवपौर्णमास्याममावास्यायावाशेषसार्द्धदण्डचतुष्टयम्प्रतिपदश्चप्रथमसार्द्धदण्डचतुष्टय पर्वसन्धिरिति वृद्धा ॥ सैंहिकेयोयदाराहुर्ग्रसतेपर्वसन्धिष्विति यम ॥ पर्वणो सन्धि ॥

पर्व्वित । पु० पर्वतमत्स्ये ॥

पर्शु । पु० कुठारे । परशौ ॥ परशश्च शृणाति । शृ हिंसायाम् । आङ्परयो.खनिशृभ्याडिच्चेतिकु ॥ पृ० ॥ यद्वा । स्पृश्यते स्पृशसंस्पर्शने स्पृशेश्वण शुनौपृचेति०शुन्० । पृ । आदेशश्च ॥

पर्शुका । स्त्री० पार्श्वास्थिनि । पांसु० इतिभाषा ॥ स्पृशति स्पृश्यतेवा । स्पृश० । स्पृशेःश्वण्शुनौपृच स्वार्थेकन् ॥ यद्वा पर्शुरिव । इवेप्रतिकृताविति कन् ॥

पर्शुपाणि । पु० गणेशे । विनायके ॥

पर्शुराम । पु० जामदग्न्ये । परशुरामे ॥

पर्शू । स्त्री० पर्शुकायाम् ॥ अप्राणिजातेरित्यूङ् ॥

पश्वध । पुं० कुठारे । परसा० इ० भा० ॥ परश्वयनम् । टुओश्वि० । अन्येष्वपीतिड: । परश्वदधाति डुधाञ् । आतइतिक. । पृषोदरादि ॥

पर्षत् । स्त्री० सभायाम् ॥ यथाह० याज्ञवल्क्य । चत्वारोवेदधर्मज्ञा. पर्षत्त्रैविद्यमेववा । सान्नूतेयसधर्मं

स्वादिकोवाऽध्यात्मवित्तम' ॥ इति ॥ अन्यदप्युक्तंलक्षणभविष्यपुराणे । द्विगुणाक्षत्रियाणान्तु वैश्यानाचिगुणास्मृता । चतुर्गुणातुशूद्राणापर्षद्दुक्तामहात्मनामिति ॥ परित' सीदन्त्यस्याम् । पदृल० । स० क्विप् । सदिरप्रतेरितिषत्त्वम् । वा०परेरन्तलोप : ॥ यद्वा । शृहभसोऽदिरिति च्यदिप्रत्ययोबाहुलकात्पृषेरपि ॥

पर्षद्वल : । त्रि० परिषद्वले । सभासदि । सभ्ये ॥ पर्षदस्त्यस्य । रज क्रष्यासुतिपरिषदोवलजित्यत्र पर्षदित्यपिपाठाद्वलच् ॥

पल । पु० पलाले । शस्यहीनधान्यनाले । पराल० इ० भा० ॥

पलम् । न० आमिषे । मांसे ॥ उन्माने । कर्षचतुष्टये । मुष्टौ । प्रकुञ्चे । बिल्वे ॥ तत्तुशास्त्रे तोलकचतुष्टयम् । वैद्यकेऽष्टतोलकम् । लौकिकेसाष्टरक्तिद्विमाषकतोलकत्रितयम् ॥ यथा । पलन्तुलौकिकैर्माने ' साष्टरक्तिद्विमाषकम् । तोलकत्रितयञ्चेयंज्योतिर्ज्ञै : स्मृतिसम्मतम् ॥ इतितिथितत्त्वम् ॥ पलसुवर्णास्तत्वार' पञ्चवापिप्रकीर्त्तिता : ॥ (**) ॥ विघटिकायाम् । घटिकाषष्टिभागैकभागे । षष्टिविपले ॥ पलदशगुर्वक्षरोच्चारणकाल: प्राणा : षडात्मकै : । तै : पलंस्यात्तत्षष्ट्याहण्डइत्यभिधीयते ॥ तेनच । साक्षान्ते पलस्यान्ते पर्याकाशिदेशेस्वामी कान्तदङ्गहतपूर्णचन्द्रमत्त्वागाद्भौचेत् । क्षुत्क्षाम प्राटेथे तथे तोराद्दु कृत प्राद्यात् तस्मादृधान्तेङ्स्थेस्यान्तेशय्येकान्ते कर्त्तव्या ॥ अस्यैकपाठात्पलमृपष्टि पाठाद्दण्डोभवति ॥ यथाहकालिदास ' । गुर्वक्षराणामुदितस्वषष्ट्यापलपलानांघटिकाकिलैका । षष्ट्याघटीनांभदिनंतयार्यैस्त्रिंशैकयाचन्द्रमसोदिनस्यादिति ॥ पलति । पलगतौ । पचाद्यच् ॥

पलक्या । स्त्री० पालङ्क्याशाके ॥ इ०रा० नि० ॥

पलगण्ड । पुं० लेपके । राज० इ० भा० ॥ पलंमांसतत्तुल्येनमृदादिनागण्डतिवदनैकदेशमिवकरोति । गडिवदनैकदेशे । पचाद्यच् ॥

पलङ्कट : । त्रि० भयशीले । भीरौ ॥ इ० त्रि० ॥

पलङ्कर ' । पुं० पित्ते ॥ इति त्रि० ॥

पलङ्कष । पुं० राक्षसे ॥ कषगुग्गुलौ ॥ पलङ्कषति । कषहिंसायाम् । मू०क: । तत्पुरुषइ० द्वितीयायाअलुक् ॥

पलङ्कषा । स्त्री० गोक्षुरके ॥ रास्नायाम् ॥ किंशुके ॥ गुग्गुलौ । मुण्डीर्याम् ॥ लाक्षायाम् ॥ क्षुद्रगोक्षुरके ॥ महाश्राव

ख्याम् ॥ मक्षिकायाम् ॥ टाप् ॥

पलप्रिय । पु॰ द्रोणकाके ॥ त्रि॰ । मासादे ॥

पलभा । स्त्री॰ पलविभायाम् । विषुवतप्रभायाम् ॥ साचमेषसङ्क्रमणाद्र्वाक्सपादाष्टदिनेमध्याह्ने द्वादशाङ्गुलजाछाया । यथोक्तग्रहलाघवे । मेषादिकेसायनमागसूर्येदिनार्द्धभाभापलभाभवेत्सेति ॥

पलल । पु॰ राक्षसे । यातुधाने ॥ न॰ पङ्के ॥ मासे ॥ तिलचूर्णे ॥ मललतिलकल्कस्यात् तिलचूर्णश्चपिष्टक । पललमधुररुच्यपित्तास्रबलपुष्टिदम् । इ॰ राजनिर्घण्ट ॥ सैन्धवतिलचूर्णे । तिलकुट॰ इ॰भा ॥ यथा । पललन्तु समाख्यातसैन्धवन्तिलपिष्टकम् । पललमलकृद्वृष्यवातघ्न कफपित्तकृत् ॥ वृंहणगुरुबल्यस्निग्ध मूत्रनिवर्त्तनम् ॥ पलति॰ पल्यतेऽनेनवा । पलगतौ । वृषादिभ्यश्चिदितिकल ॥

पललज्वर । पुं॰ पित्ते ॥ इतिहारावली॰ ॥

पललप्रिय : । पु॰ द्रोणकाके ॥

पललाशय : । पु॰ गण्डरोगे ॥

पलव । पुं॰ प्लवे । मच्छराखेटे । मत्स्यधारणोपाये । लोपो॰ इ॰गौ॰ भाषा॰ ॥

पलशतम् । न॰ तुलायाम् ॥ पलानांशतम् ॥

पलाग्नि । पुं॰ पित्ते ॥

पलाङ्ग । पुं॰ शिशुमारे ॥

पलाण्डु । पुं॰ सुकन्दके । मुखदूषणे । शूद्रप्रिये । रोचने । प्याज॰ इ॰भा॰ ॥ पलाण्डुर्यवनेष्टश्चदुर्गन्धोमुखदूषक । फरगोन्य : पलाण्डुस्तुलताकोंद्गुद्रुमश्च स ॥ इ॰धन्वन्तरि । ॥ सुश्रुतस्तु । लशुनोदीर्घपत्रश्चपिच्छगन्धोमहौषधम् । फरणास्वपलाण्डु श्च लताकश्चापदारिका ॥ गृञ्जनयवनेष्टश्चपलाण्डो र्देशजातय ॥ इत्याह ॥ पलाण्डुस्तुगुणैर्ज्ञेयोरसोनसदृशोबुधै ॥ स्वादुपाकरसोऽनुष्ण कफकृन्नातिपित्तल ॥ हरतेकेवलवातबलवीर्यकरोगुरुरिति भावप्रकाश ॥ पलति । पलरक्षणे । बाहुलकात्आण्डुप्रत्यय ॥

पलाद : । पु॰ । स्त्री॰ । राक्षसे ॥ पलमत्ति । अद॰ । कर्मण्यण् ॥

पलादन । पुं॰ । स्त्री॰ । राक्षसे ॥ त्रि॰ मांसभक्षणशीले ॥

पलान्नम् । न॰ पाकराजेश्वरोक्तप्रकारे मासादियुक्तसिक्तभक्ते । पलौदने । मासौदने ॥

पलाप । पुं॰ गजगण्डे । हस्तिकपोले ॥

पलायनम् । न॰ अपयाने । प्रद्रावे । भयादिनास्थानान्तरगमने । भागना॰ इ॰ भा॰ ॥

पलायित । त्रि० नष्टे ॥ गृहीतदिशि । तिरोहिते । पलायनविशिष्टे ॥ द्रु० हे० ॥

पलाल । पु० । न० । निष्फलितृणादिकाण्डे । मस्प्रशकधान्यनाले ॥ पलति रक्षतिवा । पलगतौ । तमि विशिविडिमृणिकुलिकपिपलिपञ्चिभ्य कालन् ॥ पलमलतिवा । अ-ल० । कर्मण्यण् ॥

पलालदोहद । पु० आम्रवृक्षे ॥ इति शब्दमाला ॥

पलालिनम् । न० महत्पलालपलाली तद्वति ॥ मत्वर्थे० पामादित्वात्न. । शाकीपलालीदद्रूणांह्रस्वत्वञ्च ॥

पलाली । पु० महत्पलाले ॥

पलाश । पु० शव्याम् ॥ राक्षसे ॥ मगध देशे ॥ हरिते ॥ किंशुके पर्णे । वातपोथे । याज्ञिके । ढाक० इ० भा० ॥ पलाशोदीपनोवृष्य : सरो ष्णोव्रणगुल्मजित् । कषाय : कटु कस्तिक्त स्निग्धोगुदजरोगजित् ॥ भग्नसन्धानकृद्दोषग्रहण्यर्श ' कृमी न्हरेत् । तत्पुष्पस्वादुपाकेतुकटु तिक्तंकषायकम् ॥ वातलंकफपित्ता स्रकृच्छ्रजिद्ग्राहिशीतलम् । तृट्दा हशमनवातरक्तकुष्ठहरपरम् ॥ फल लघूष्णमेहार्श . क्रिमिवातकफापह म् । विपाकेकटुकंरूक्षकुष्ठगुल्मोदरप्र णुत ॥ न० । छदने । पर्णे । छदे । पत्रा० इ० भा० ॥ पलाशपत्रे ॥ शासने ॥ परिभाषणे ॥ त्रि० । हरि द्वर्णविशिष्टे ॥ निर्दये ॥ पलाशस्यप त्रस्यायम् । अण् । मत्वापूर्वकत्वा द्बृह्यभाव ॥ यद्वा । पलमांस० अश्नाति । अश० । कर्मण्यण् ॥ प- लेमांसेआशायस्यवा ॥

पलाशक । पु शव्याम् । किंशुकवृक्षे ॥

पलाशपर्णी । स्त्री० अश्वगन्धायाम् ॥

पलाशसार । पु० शाकद्रुमे ॥

पलाशाख्य : । पु० नाडीहिङ्गुनि ॥

पलाशाख्य । पु० नाडीहिंगुनि ।

पलाशान्ता । स्त्री० गन्धपत्रायाम् ॥

पलाशी । पु० वृक्षमात्रे पलाशानि सन्त्यस्य । अतइनि ॥ राक्षसे ॥ क्षीरिवृक्षे ॥

पलाशी । स्त्री० लताविशेषे । पत्रवल्ल्याम् । अम्लपर्ण्याम् ॥ शव्याम् ॥ काश्मीरगन्धपलाशीतिप्रसिद्धे । क चूरप्रभेदे ॥

पलिक्नी । स्त्री० वृद्धायाम् ॥ पलितम स्त्यस्या : । भर्० अच् । असितप- लितयोर्न । छन्दसिक्नमेके० इत्यस्य वोक्तिभाषायामपिच्छनयोस्तइत्यस्य स्यानेक्नइत्यं षष्ठादेशोभवति । ना न्तत्वान्ङीप् ॥ गर्भिण्यागवि ॥

पलिघ । पुं० काचकलसे ॥ घटे ॥ प्राकारगोपुरे ॥ परिहयानम्० परि हन्यतेऽनेनवा । हन० । परौघइत्यप्

घादेशश्च ।
पलितम् । न० केशपाके । जरसाके शानाशौक्ल्ये ॥ फलतिफलनवा । फलनिष्पत्तौ । त्रिफलाविशरणे । नपुसकेभावेक्त । लोष्टपलिताविति साधु ॥ फलेरितजादेश्चपो वा ॥ शैलजे ॥ तापे ॥ कर्दमे ॥ केशपाशे ॥ केशशुक्लताहेतौरोगे ॥ तन्निदान यथा । क्रोधशोकश्रमकृत शरीरोष्माशिरोगत । पित्तञ्चकेशान्पचतिपलितन्तेनजायत इतिमाधव । अस्यचिकित्सा यथा । लोहचूर्णस्यकर्षन्तुदशार्द्धञ्चूतमज्जत । धात्रीफलद्वयपथ्ये द्वेतथैकंविभीतकम् ॥ पिष्ट्वालोहमयेभाण्डेस्थापयेन्निशिवासयेत् । लेपोऽयमचिराद्धन्ति पलितन्तेहसशय ॥ दशार्द्धपञ्चकर्षाणि ॥ काश्मर्यामूलमादौसहचरकुसुमकेतकस्यापिमूललौहचूर्णसभृङ्गंत्रिफलपलयुततैलमेभि'पचेद्य । कृत्वालोहस्यभाण्डेक्षितितलनिहितस्थापयेन्मासमेकंकेशा काशप्रकाशाअपिमधुपनिभा अस्ययोगाद्भवन्ति ॥ त्रिफलानीलिकापत्र भृङ्गराजोऽयसीरज '। अवीमूत्रेणसपिष्ट लेपात्कृष्णीकरपरमिति भावप्रकाश . ॥
पलिता । स्त्री० वृद्धायाम् ॥ असितपलितयोर्नेति० प्रतिषेधातृङीप् तकारस्यनकारादेशश्चन ॥
पलौदनम् । न० मासौदने । पलाव० इ० भा० ॥ पलस्यओदनस्यअनयो समाहार ' ॥
पल्य : । त्रि० मासभोजिनि ॥ पलम र्हति । तदर्हतीतियत् ॥
पल्यङ्क । पुं० पर्यङ्के ॥ मञ्चे ॥ वृष्याम् ॥ पर्यस्तिकायाम् ॥ परितोऽङ्क्यते । अकिलक्षणे । घञ् । परेश्चघाङ्कयोरितिलत्त्वम् ॥
पल्ययनम् । पु० पर्याणे । पलानइति भाषा० ॥ इ०हे० च० ॥ वल्गाऽन्नालिकापल्ययनमिति० त्रि० शे० ॥
पल्ल । पु० स्थूलकुसूलके । पालुइति मरा इ० च० गौ० भा० ॥
पल्लव . । पुं० । न० । किसलये । नवपत्रे । प्रवाले ॥ पर्वपत्रादिसङ्घाते शाखाया पल्लवोमत 'इतिकोशान्तरम् ॥ पल्यते । सं० क्विप् । लूयते । लूञ्० । ऋदोरप् । पल्चासौलवश्च ॥ विटपे ॥ विस्तरे ॥ अञ्चले ॥ शृङ्गारे ॥ अलक्तरागे ॥ चिङ्गे ॥
पल्लवक . । पु० वेश्याधवे ॥ मत्स्यविशेषे ॥
पल्लवद्रु । पुं० अशोकवृक्षे ॥
पल्लवाङ्कुर । पु० तोकमे । कौपर० इ० भा० ॥
पल्लवाधार . । पुं० शाखायाम् ॥
पल्लविक : । त्रि० कामुके ॥

पल्लवितम् । त्रि० लाचारक्ते ॥ सपल्लवे ॥ तते । विस्तृते ॥ पल्लवा सञ्जाताऽस्य ' ता० इतच् ॥

पल्लवी । पु० द्रुमे ॥

पल्लि । स्त्री० चुद्रग्रामे ॥ कुट्याम् ॥ कुटीसमूहे ॥

पल्लिका । स्त्री० गृहगोधिकायाम् ॥

पल्लिवाह । पु० तृणविशेषे ॥ पल्लिवा होदीर्घतृणे सुपचस्ताम्रवर्णक । अहठ ' शाकपचादि , पशूनामवलप्रद ' ॥

पल्ली । स्त्री० अल्पग्रामे ॥ कुट्याम् ॥ दक्षिणदेशप्रसिद्धे नगरविशेषे ॥ कुड्यमत्स्ये । विश्वम्बरायाम् । गृहगोधिकायाम् । ज्ञापकी इति० ङिप क्ली०इतिच०भा० ॥ अस्याःपतन फलमुक्तंज्योतिश्शास्त्रे । यथा । निपततियदिपल्लीदक्षिणाङ्गेनराणामुस्व जनधनवियोगोलाभदावामभागे । उरसिशिरसिपृष्ठेकण्ठदेशेचराज्यकरचरणहृदिस्थासर्वसौख्यंददातीति ॥ दिग्विशेषेतस्याः . शब्दफल यथा । वित्तंब्रह्मणिकार्यसिद्धिरतुलाशक्रेहुताशेभयम् । याम्यामग्निभयसुर द्विषिकलिर्लाभ . समुद्रालये । वायव्यांवरवस्त्रगन्धसलिलदिव्याङ्गना चोत्तरे ऐशान्यामरणंध्रुवनिगदित दिग्लक्षणंखञ्जने ॥ज्ये ष्ठीरुतेसुतेप्ये वमूचु : केचिच्चकोविदा इति० ॥

छिन्नलक्षणखञ्जनेयज्ज्येष्ठीरुतेपि तदितिच ॥

पल्वलम् । न० क्षुद्रसरसि । वेशन्ते । डवोखरा० ड० भा० ॥ अल्पसर पल्वलस्त्वाद्यचन्द्रर्णगैरदौ । नति छतिजलक्लिन्नतृतत्त्व वारिपाल्व लम् ॥ पाल्वलगुर्वभिष्यन्दिविष्टम्भि दोषलपरम् ॥ पलतिपल्यतेवा । प लगतौ । सानसिवर्णसिपर्णसितगडुलाङ्कुचपालित्वलपल्वलधिष्ण्यशि- ल्पा इतिवलच् , यद्वा । पिबन्त्य स्मिन् । पापाणि अस्मात्स नसौख्या दिनेवलच्लुगागमोह्रस्वत्वश्च ।

पल्वलावास । पु० कूर्मे ॥

पव । पुं० निष्पावे । धान्यादीनानि ष्पुनीकरणे ॥ वायौ । पवनम् । पूञ्० । ऋदोरप् ॥ न० । गोमये इति श० च० ॥

पवन । पुं० वायौ । मरुति ॥ पुनातिपवतेवा । बहुलमन्यत्रापीतियुच् ॥ पवनःपावयितॄणांवेगवतावा मध्येभगवतोविभूति । सप्तवायु पवना यथा । भूवायुरावहइहप्रवहस्तदूर्द्ध स्यादुद्वहस्तदनुसंवहसञ्ज्ञक श्च । अन्य परोपिसुवह ' परिपूर्व कोस्माद्वाह्य ' परावहइमेपवना . प्रसिद्धाइतिसिद्धान्तशिरोमणि : ॥ आवसथ्याग्नौ ॥ निष्पावे । प्रवाति सूर्पादिनाधान्यस्तोतृत्वेपणेननिस्तु

पीकरणे ॥ स्वातिनक्षत्रे ॥ लब्वा दिन्निकले ॥ ।ऽ। मध्यगुरौचतुष्क ले ॥ ।ऽ न० । आपाके । कुम्भ कारस्यामघटादीना पाकस्थाने । आवाहृतिभा० ॥ जले । त्रि० । पवित्रे । प्रयते ॥ पूञ्० । ल्युट्

पवनविजय · । पुं० गरुडोक्तेशुभाशुभ सूचकेश्वासवायुजयोपायकेग्रन्थवि-शेषे ॥

पवनव्याधि . । पुं० श्रीकृष्णस्यमित्रे । उद्धवे ॥ वायुरोगे ॥

पवनात्मज । पुं० हनूमति ॥ अग्नौ ॥ पवनस्यात्मज ॥

पवनाल । पुं० तृणाद्धे । देवधान्ये । जुम्हरी इतिजुवार० इतिचभा०

पवनाश । पु० सर्पे ॥

पवनाशन । पुं० सर्पे ॥ पवनोश न यस्य ॥

पवनाशनाश · । पु० गरुडे ॥ मयूरे

पवनेष्ट । पुं० महानिम्बे ॥ निम्बे

पवनोम्बुजम् । न० परूषवृक्षे ॥

पवमान । पुं० वायौ ॥ पवते । पूङ्॥ पूङ्यजो शानन्।आनेमुक् ॥ स्तोत्रविशेषेषु ॥ ज्योतिष्टोमेबहिष्पाद शस्तोत्राणितचोद्गात्रायैस्त्रिभिर्यज मानार्थं कर्मक्रियते तानिपवमान पदवाच्यानिस्तोत्राणीत्यर्थः . ॥ नि र्मथ्याग्नौ ॥ सचगार्हपत्याग्नि . । यथा । अथय : पवमानस्तु निर्मथ्योग्नि : सउच्यते । सवैगार्ह पत्योग्नि . प्रथमोब्रह्मण:सुत ' इ तिमत्स्यपुराणम् ॥

पवनात्मज : । पुं० हव्यवाहने ॥ यथा । पवमानात्मजोह्यग्निर्हव्यवाह नउच्यते ॥

पवारुक । पुं० अश्मनि । पाषाणे ।

पवि । पुं० कुलिशे । वज्रे ॥ पुनाति । हीरकस्यपवित्रत्वोक्ते. पुनाते रचइ : ॥

पवित ' । त्रि० पविचिते । पूते ॥ पूयतेस्म । पूङ् । क्त. पूङस्त्रे तीड्विकल्प: । गुणावादेशौ ॥ न० । मरीचे ॥

पविता । त्रि० पवित्रताकारके ॥ पुनाति । पूञ्० । तृच् ॥

पवित्रम् । न० वर्षणे ॥ कुशे ॥ ताम्रे ॥ पयसि । जले ॥ अर्घोपकरणे ॥ यज्ञोपवीते ॥ घृते ॥ मधुनि ॥ पार्वणश्राद्धादावर्घार्थे होमादावाज्य संस्काराद्यर्थंद्वसाग्रनिर्गर्भकुशान्तर वेष्टितप्रादेशमात्रद्वये ॥ यथा । अनन्तर्गर्भिणं साग्रं कौशंद्विदलमे व च । प्रादेशमात्रंविज्ञेयं पवित्रंयत्र कुत्रचिदिति ॥ पुं० । तिलकवृक्षे ॥ पुत्रजीववृक्षे ॥ त्रि० व्रतादिना शुद्धे । प्रयते । पूते ॥ शुद्धिजनके । मेध्ये ॥ पावने । शुद्धिकरे ॥ पुनाति । पूञ्० । कर्त्तरिचर्षिदेव

तयोरितीच : ॥ यद्वा । पवतेपुना तिवा । पू ङ्॰ । पू ञ्॰वा । अशि चोदिभ्यइत्रीचो ॥

पवित्रकः । पु ॰ अश्वत्थे ॥ उदुम्बरे ॥ कुशे ॥ मदनके ॥ न॰ । शणसूत्र जाले ॥ पवित्रमुपवीतम्तद्वदिव । द्रवेप्रतिकृतावितिकन् ॥ पविचा दृविपरीतलक्षणयासञ्ज्ञायाकोवा । सम्बन्धितुपवित्रकमितिस्मृति ॥ जाम्बूनाभिमानात्प्रतिमासुपवित्र कम् । इत्यग्निपुराणम् ॥

पवित्रधान्यम् । न॰ यवे ॥ द्व॰ रा॰ । न॰ ॥

पविचा । स्त्री॰ नदीविशेषे ॥ तुल स्याम् ॥ अश्वत्थीवृचे ॥ हरिद्राया म् ॥

पविचारोपणम् । न॰ श्रीकृष्णसंप्रदान कोपवीतदानरूपोत्सवविशेषे ॥ यथा । श्रावणस्यसितेपक्षेद्वादश्यांवैष्णवै मुंदा । कर्तव्य . कृष्णदेवस्यपवि चारोपणोत्सव .॥ श्रीकृष्णदेवस्ये त्यु पलक्षणमन्यदेवतानामपि ॥

पविचारोहणम् । न॰ पविचारोपणे ॥ यथा । आषाढशुक्लपचस्ययाष्टमी श्रावणस्यच । पविचारोहणकुर्या द्देव्या : प्रीतिकरपरम् ॥ दुर्गाम न्त्रेणमन्त्रेणदुर्गाबीजेनभैरव । वैष्ण वीतंचमन्त्रेणपविचारोहणंचरेत् ॥ विशेषाच्छ्रावणारम्भदेव्या : कुर्यात् पवित्रकम् । सर्वेषामपिदेवानापवि चारोहणचरेत् ॥

पविचाष्टकम् । न॰ स्याणवादिषु ॥ स्था णुस्वर्णाक्षगोकर्णभद्रकर्णमहावला वस्त्रापदाविमुक्ताख्यरुद्रकोट्य ष्टम गडले ॥ आकाशतत्त्वे एतत्पविचा ष्टकमिति मृगेन्द्रस हिता ।

पविचित । चि॰ पविचे । प्रयते । पूते । शुची । शुद्धे ॥ पविचमञ्जात मस्य । ता॰ इतच् ॥

पशव्य । चि॰ पशुपभोग्यबालतृणादि समृद्धे देशे ॥ पशुभ्योहितमित्यर्थेय त् ॥

पशु । अ॰ दर्शने ॥ परमदर्शने ॥ स- म्यगर्थे ॥ पशुमन्यमाना ॥

पशु . । पु ॰ मृगादो । सि इव्याघ्रादौ । तिर्यगादिसर्वप्राणिषु ॥ अस्यल क्षणम् । लोमवत्लाङ्गूलवत्त्वम् ॰ ङ्ग॰ भा॰ रत्नकणाद । ग्राम्यारण्यप्रभेदे नचतुर्दशविधा पशवोभवन्ति । यथा इपठौनसि . । गौरविरजोऽश्वोश्व तरोगर्दभोमनुष्यश्चे ति सप्तग्राम्या: पशव: । महिषवानरर्क्षसरीसृपरूरु पृषतमृगाश्चे तिसप्तारण्या'पशवइति दुर्गोत्सवतत्त्वम् ॥ देवाजे । छागे ॥ छागादौपशुपदप्रयोगमाहयज्ञपार्श्व उक्षोवायदिवामेषश्छागोवायदिवाह य'पशुस्थानेनियुक्तानांपशुशब्दोभि धीते ॥ इतिबलिदानप्रकरणे ि थि

तत्त्वम् ॥ अवैधपशुहननेदोषो यथा गारुडे । वसेत्सनरकेघोरेदिनानि पशुरोमभि । सम्मितानिदुराचा- रोयोहन्त्यविधिनापशून् ॥ इति ॥ प्रमथे । महादेवगणप्रभेदे ॥ स्वर्गा- दिकामेससारपरवशेनरे ॥ घृणा द्यष्टपाशबद्धेप्राणिनि ॥ पाशायथा घृणाशङ्काभयलज्जाजुगुप्साचेतिपञ्च मो । कुलशीलतथाजातिरष्टौपाशा' प्रकीर्त्तिता ॥ पाशबद्ध पशु प्रोक्त पाशमुक्त सदाशिव इति ॥ ज्ञा नशून्येजने ॥ यथा । आहारनिद्रा भयमैथुनानिसमानमेतत् पशुभिर्न राणाम् । ज्ञाननराणामधिकोविशे षोज्ञानेनहीना पशुभि समाना इति ॥ गवादौ ॥ देवे ॥ प्राणिमा त्रे ॥ यज्ञे ॥ यज्ञोदुम्बरे ॥ साध कानाभावत्रयाणांप्रथमेभावे ॥ तस्य निर्णयोयथा । नित्यस्नात्व तथासन् ध्यावन्दनपित्ततर्पणम् । देवताद र्शनपीठदर्शनतीर्थदर्शनम ॥ गुरोरा ज्ञापालनञ्चदेवतानित्यपूजनम । पशुभावस्थितोमर्त्त्योमहासिद्धि लभे, द्ध्रुवम् ॥ अपिच । पत्र पुष्प फल तोयस्वयमेवाहरेत्पशु । नशूद्रदर्श नकुर्यान्मनसानस्त्रियस्मरेत् ॥ आ दौभावपशो कृत्वापश्चात्कुर्यादवश्य कम् । वीरभाव महाभाव सर्वभा वोत्तमोत्तमम् ॥ तत्पश्चादतिसौन्द र्यदिव्यभावमहाफलमिति रुद्रयाम ले उत्तरखण्डम् ॥ दिव्यस्तुदेवता प्राय'शुद्धान्त करण सदा । द्वन्द्वा तीतोवीतराग . सर्वभूतसम क्ष- मी ॥ तस्यकालो यथा । आदौद्द शमदण्डेनपशुभाव मथापिवा । इ- ति रुद्रजामले उत्तरखण्डम् ॥ जन्ममात्र पशुभावबर्षषोडशकाव धिइतिबामकेश्वरे ५१ पटल ' । पशुभावकर्त्तव्याकर्त्तव्यगर्भतद्भाव निन्दा माहरुद्रजामले । पशुभाव रतायेचकेवल पशुरूपिण । रात्रौ यन्त्रञ्चमन्त्रञ्चनस्पृशेन्नजपेत्क्वचित् ॥ सशयोबलिदानेच तन्त्रेचस शय सदा ॥ मन्त्रेचाक्षरबुद्धिञ्चअविश्वा सोगुरौसदा ॥ प्रतिमासु शिलाबु द्धिर्भेदकोदैवते पुन । निरामिषेण देवेशिदेवताया प्रपूजनम् ॥ अ- ज्ञानेन तथा ज्ञानप्रत्यक्ष देहताड नम् । सर्वेषाञ्चैवनिन्दान्तुय कुर्या च्चमहेश्वरि ॥ सएवशुभावेनह्यधम परिकीर्त्तित. ॥ इति रुद्रजामले उत्तरखण्डे ६ पटल ॥ रात्रौनैव यजेद्देवी स ध्याया वापराह्णके । ऋतुकालविना देविरमण' परिवर्ज्ज येत् ॥ मासादिक महेशानिवर्जयेत् पञ्चपर्वसु । यदन्यद्दैवविहित कु- र्यान्नियमतत्पर : ॥ इतिनित्यात न्त्रे प्रथमपटल : ॥ (**) ॥ ससा

र्यत्वी ॥ यथा । चैतन्यदृक्क्रियारूप तदस्त्यात्मनिसर्वदा । सर्वतश्चयतोमुक्तौश्रूयतेसर्वतोमुखम् ॥ सदप्यभासमानत्वात् तन्निरुद्ध प्रतीयते । बध्योनावृतवीर्यस्यसोतएवविमोक्षणात ॥ अस्यार्थ. । ज्ञानक्रियात्मकयच्चैतन्य तदात्मन्यस्ति नतु शरीरसमवेतमितिचार्वाकनिराकरणेशास्त्रेप्रतिपादितम् । तच्चसर्वदैवास्तिनतुमुक्ताविवमुक्तौतुस विश्वभावो यथा । वैशेषिकैरिष्टस्तथाविधायामोक्षरूपायामुक्तेर्निराकृतत्त्वात् । यतोमुक्तौमुक्तात्मनामर्वतोमुखस्यचैतन्यस्यश्रवणात् । नचतेषातदानीमेवतदुत्पद्यतेइतिवाच्यम् । सदुत्पत्ते सत्कार्यवादेप्रतिपादितत्त्वात् । अथमुक्ताविवतथाविधचैतन्यस्तुते . पूर्वस्वतदनुपलम्भादन्वयव्यतिरेकाभ्याससारावस्थायासर्व्वतोमुखत्वचैतन्यस्यकुतइत्याशङ्कानिरासायाह । सदपीतिसत्त्वमनुपलभ ससाराव स्थायांतथाविधस्यचैतन्यस्यसत्त्वन्यथासिद्ध: । व्यञ्जकाभावकृतोहियोनुपलम्भःसनाभावसाधकोऽपितुसति व्यञ्जकेयश्चायमनुपलम्भ सव्यञ्जकाभावकृतःअतश्चनाऽसत्त्वसाधयति । तच्चसर्वतोमुखत्वसदपियस्मान्नप्रथते तत : केनापिप्रतिबद्धमित्यवसीयते । अस्माच्चहेतोरनावृतनिजसाम

र्थ्यं स्वपुरामुक्तौ मयात्माध्य इति ॥ पश्यतिसर्वमविशेषेण । हशिर् ० । अजिहृशिकम्यमिपशिबाधामृजिपशितुक्धुक्दीर्घहकारार्श्च स्य, पशिरादेशश्च ॥ पशवश्चग्राम्यारण्याः वेदस्मृत्यागमविहितकर्मसाधनभूता । नहितान्विनायज्ञाद्यनुष्ठानमृयज्ञार्थमेवचतेषामृष्टि । तत्र ग्राम्याअजाद्येोगवयाद्ययस्त्वारण्या इतिभेद ॥

पशुक्रिया । स्त्री० मैथुने ॥

पशुजाति । स्त्री० पशुशब्दवाच्ये ॥ सिंहाद्याहरिणाद्यास्तगवाद्यायेचजन्तव . । तेसर्वेशास्त्रदृष्ट्याच प्रोक्ताहिपशुजातय . ॥

पशुपति । पु० चन्द्रमौलौ । शिवे ॥ पशोर्हंस्यपति ॥ पालयामिपशून्यस्मात् सृजामिचयदृच्छया । तेषाञ्चपतिरेवाह तस्मात्पशुपति' स्मृत : ॥ पशूनाजीवानासुरनरादि रक्षापतिरितिवा । यथा । ब्रह्माद्यास्थावरान्ताश्चपशव ' परिकीर्त्तिता : । तेषापतिर्महादेव:स्मृत: पशुपति श्रुतौ ॥ हुताशने ॥ यजमानमूर्त्तौ

पशुपल्वलम् । न० कैवर्त्तीमुस्तके ॥

पशुपाल ' । पु० हस्त्यर्थतयाछागमेषादिपोषके ॥

पशुपाश ' । पुं० पुत्रकलत्रादिषु ॥ घृणालज्जाद्यष्टसु ॥ पशूनांपाशोष्टगुणा

दि । घृणाशङ्काभयलज्जाजुगुप्सा चेतिपञ्चमी। कुलशीलतथाजाति रष्टौपाशा . प्रकीर्त्तिता ॥ षड्द र्शनमहाकूपेपतिता पशव प्रिये । परमार्थनजानन्तिपशुपाशनियन्त्रि ता इतिकुलार्णवे १ उल्लासे ॥

पशुपाशक । पु० रतिबन्धविशेषे ॥ य था। स्त्रियमानतपूर्व्वाङ्गीस्वपादान्त पदद्वयम् । ऊर्द्धाशिनरमेत्कामीवन्धोय पशुपाशक ॥

पशुप्रेरणम्। न० गवादीनाचालने । उद्जे ' हाकना० इ० भा० ॥ प-शूनाप्रेरणम् ॥

पशुमोहनिका ' स्त्री० कटुकीलतायाम्

पशुरज्जु । स्त्री० अश्वादिबन्धनरज्जौ । दामन्याम् ॥ पशुबन्धनीरज्जु ॥ शाकपार्थिवादि ॥

पशुराज .' पु० सिंहे ॥ पशूनाराजा टच् ॥

पशुवृत्ति । त्रि० अतिवत्सले ॥

पशुहरीतकी ' स्त्री० आम्रातकफले ॥

पश्चात् । अ० प्रतीच्याम् ॥ चरमे ॥अ धिकारे ॥ पृष्ठभागे ॥ अपरस्मिन्० अपरस्मात्० अपरोवा। वसत्याग तोरमणीयवा । पश्चादितिसूत्रेणाञ्च परस्यपश्चभाव आतिश्चप्रत्ययोऽ स्तातेर्विषये ॥

पश्चात्ताप . । पु० अनुतापे । विप्रती सारे । अनुशोचने । पछतावा० इ० भा० ॥ पश्चात्तपनम् । तपसतापे । घञ् ॥

पश्चार्द्ध ' । त्रि० अपरार्द्धे । शेषार्द्धे ॥ अपरश्वासावर्द्धश्च । अपरस्यार्द्धे पश्च भावोवक्तव्य ॥

पश्चिम . । त्रि० चरमे । अन्ते ॥ पश्चा द्भव . । अग्रादिपश्चाड्डिमचच् ॥ प श्छम० इ० प्रसिद्धे देशे ॥

पश्चिमक्रतु । पु० अन्त्येष्ट्याम् ॥

पश्चिमरात्रि । स्त्री० अपररात्रे ॥ ॥ पश्चिमाचासौरात्रिश्च । विशेषणस मास ॥

पश्चिमा 'स्त्री० अस्ताचलावच्छिन्नदिशि । प्रतीच्याम । वारुण्याम् ॥ तद्दि-ग्भववायुगुणा यथा। पश्चिमोमारुत स्तीक्ष्ण कफमेदविशोषण '। स-द्य प्राणहरोदुष्ट शोषकारीशरी रिणाम् इ० रा० नि० ॥ अपिच। पश्चिमोग्निश्पूर्वर्णवलारोग्यविवर्धन ' कषाय शोषण स्वर्यौरोचनो विशदोलघु ॥ अपालघुत्त्ववैशद्यशैत्य वैमल्यकारक.। सर्वद्रव्येष्वभिव्यक्त प्रभावरसवीर्यकृत् ॥ व्रणसरोपणस्त्व च्योदाहशोयतृषापह इ० रा०व० ॥

पश्य । अ० विस्मये ॥ प्रशसायाम् ॥

पश्यन् । त्रि० ईक्षणकर्त्तरि ॥ पश्यति । दृशिर्० । लट . शतृ ॥

पश्यत । अ० प्रशंसायाम् ॥ विस्मये ।

पश्यतोहर ' । त्रि० चोरे ॥ यथा ।

य ' पश्यतोहरेदर्थंसचौर . पश्यतोहर ॥ पश्यन्तमनादृत्यहरति । हृञ् । अच् । षष्ठीचानादरे० इतिषष्ठी । वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरेष्विति० षष्ठ्याअलुक् ॥

पश्यन्ती । स्त्री० मूलाधारोत्थितहृदयगतनादरूपवर्णे ॥ यथा । मूलाधारात्प्रथममुदितोयस्तुतार . पराख्य : पश्चात्पश्यन्त्यथहृदयगोबुद्धियुङ्मध्यमाख्य . । इत्यलङ्कारकौस्तुभ : ॥

पश्वाचार ' । पुं० आचारविशेषे ॥ यथा । वेदोक्तेनयजेद्देवींकामसङ्कल्पपूर्वकम् । सएववैदिकाचार पश्वाचार सउच्यते ॥ इत्याचारतन्त्रम् ॥

पष्ठवाट् । त्रि० युगपार्श्वगे । दमनकालेकण्ठारोपितकाष्ठवाहे ॥ पश्चमषष्ठवावर्षंवहति । वह० । वहश्चेतिण्वि : । पृषोदरादि . ॥

पष्ठौही । स्त्री० बालगर्भिण्यागवि ॥ प्रष्ठ वहति । ण्वि । वाहइतिङीष् पृषोदरादित्वाद्रलोप ' ।

पस्त्यम् । न० निशान्ते । सद्मनि । गृहे ॥ अपस्त्यायति । ष्टै स्त्यै शब्दसङ्घातयो: । आतश्चोपसर्गइतिक: । पृ० ॥

पस्पश ' । पु० शास्त्रारम्भसमर्थकेउपोद्घातसन्दर्भग्रन्थे ॥

पस्पशा । स्त्री०, महाभाष्यस्यादिमाह्निके ॥ स्पशबाधनस्पर्शनयो : । यङन्तादचियङोऽचिचेतिलुक् । अ

जाद्यतष्टाप् । दीर्घाकितश्चाभ्यासस्यदीर्घस्तुनभवति । स्फाप् वैकविधेरनित्यत्वादित्याहु ॥

पह्नव । पु० म्लेच्छधारिम्लेच्छजातिविशेषे ॥ पारदाःमुक्तकेशाश्चपह्नवा श्मश्रुधारिण इतिहरिवंश ॥

पह्निका । स्त्री० कन्तृणे । वारिपर्ण्याम् ॥

पा । स्त्री० रक्षणे ॥ पाने ॥ पूते ॥ पूरिते ॥ त्रि० पातरि ॥ पानम् । पा० । भ० । क्विप् ॥

पांशवम् । न० लवणविशेषे । रोमके । औद्भिज्जे । ऊषरजे । खौषरे । रेह इति भा० ॥

पांशु । पु० धूलौ ॥ सम्पार्श्वचिरमचितगोमये ॥ पर्पटे ॥ कर्पूरविशेषे ॥ न० इन्द्रखमन्यरे ॥ स्त्री० । नदीभेदे ॥ पंशति । पशिनाशने । अर्जिदृशिकम्यमिपशिबाधामित्यादिना० साधु . ॥

पांशुका । स्त्री० केतक्याम् ॥ रजखलायाम् ॥ इ० शब्दाम्बुधि : ॥

पांशुकासीसम् । न० कासीसे इ० रा०॥

पांशुकुली । स्त्री० रथ्यायाम् ॥ इ० हारावली ॥

पांशुकूलम् । न० अनामपट्टोलिकायाम् ॥ यथा । शासनंधर्मकीलःस्यान्मकुति : शूद्रशासनम् । पट्टोलिकाक्रयकीलापांशुकूलंनकस्यचिदिति

त्रिकाण्डशेष ॥

पाशुचत्त्वर । पुं० घनोपले ॥

पाशुचन्दन । पु० शिवे ॥ पांशुचन्द नमिवयस्य ॥

पाशुचामर. । पु० दूर्वाञ्चिततटीभुवि ॥ वर्ह्रापके ॥ प्रशसायाम् ॥ पुरोटौ ॥ धूलिगुच्छके । पटवासे ॥

पाशुजम् । न० पाक्यलवणे । औद्भिदे ॥

पाशुपत्रम् । न० वास्तूके ॥

पाशुपर्य्याय । पु० पर्प्पटे । पित्तपापडा द्र० भा० ॥

पांशुमर्द्दन । पुं० केदारे ॥

पाशुर । पु० दृशके । डास०द्र०भा० ॥ पीठसर्पिणि । खञ्जे ॥ पाशुरस्यास्त्यस्मिन्वा । नगपाशुपाण्डुभ्यश्चेतिर ॥

पांशुरागिणी । स्त्री० महामेदायाम् ॥

पाशुल । पुं० पुंश्चले ॥ शम्भौ खट्वाङ्गे ॥ हरे ॥ पापिनि ॥ पूतिके । करञ्जविशेषे ॥ त्रि० पांशुयुक्ते ॥ पाशु० अस्तिअस्यअस्मिन्वा । सिध्मादित्वाल्लच् ॥

पाँशुलवणम् । न० औद्भिदे । पाशवे । वसुके ॥ औद्भिद पाशुलवणयज्जातभूमित स्वयम् । क्षारगुरुकटु स्निग्ध सं घ्नलवातनाशनम् ।'

पाशुला । स्त्री० असत्याम् ॥ भुवि ॥ पांशुपापमस्त्यस्या. । नगपाशुपाण्डुभ्यश्चेतिर । कपि० । ल ' ॥ सिध्मादित्वाल्लज्वा ॥ पांशुलातिवा । आतोनुपेतिक ॥ केतक्याम् ॥ रजस्वलायाम् ॥ द्र० रा० नि० ॥

पांसन । त्रि० दूषके । दोषोत्पादके

पासु । पु० रजसि । धूलौ ॥ चिरसचितगोमये । खात० द्र० भा० ॥ पसयति । पसिनाशने । अर्जिदृशिकमीति कुः ' ॥

पासुल । त्रि० रजस्वले ॥ पासुरस्यास्य । सि० लच् ॥

पाकः । पु० परिणतौ ॥ शिशौ ॥ केशस्यजरसाशौक्ल्ये ॥ उदराग्निना हारस्यपचने ॥ पचायाम् । स्थाल्यादौपचने ॥ स्थालीमार्जनाद्योदन परीक्षान्तोव्यापारनिचय पाक इतिस्मृति ॥ भर्जनतलनस्वेद. पचनक्वथिततथा । तान्दूरपुटपाकश्पाक ' सप्तविधोमत. ॥ नित्यनूतनभाण्डेनकर्त्तव्य पाकएवच । अथवापक्षपर्यन्त ततस्त्याज्यमनीषिभि ॥ दैत्यविशेषेन्द्रभ्रातरि ॥ पचनम् । डुपचष्० । घञ् ॥ पच्यते,परिणम्यतेऽनेनवा । हलश्चेतिघञ् ॥ पातिपिबतिवा । पारक्षणे पानेवा । अर्भकपृथुक पाकावयसीतिकन्प्रत्ययान्तोनिपातित '। द्रुणभीकापाशलीतिकन्वा ॥

पाकक्लृप्ता । पु० पानीयामलके ॥

कृष्णफलपाके ॥

पाककृष्णफल । पुं० पाककृष्णे ॥

पाकजम् । न० काचलवणे ॥ परिणामशूले ॥ त्रि० । पाकाज्जाते ॥ यथारूपादिचतुष्टयपृथिव्यापाकजमनित्यञ्च । अन्यत्रापाकजनित्यमनित्यञ्च । नित्यगतनित्यमनित्यगतमनित्यम् । पाकस्तेज . संयोग . तेन पूर्वरूपनश्यतिरूपान्तरमुत्पद्यते इत्यर्थ. । अत्रपरमाणुष्वेवपाकोनद्व्यणुकादौ,आपाकनिक्षिप्ते घटेपरमाणुरूपान्तरोत्पत्तौश्यामघटनाशेपुनर्द्व्यणुकादिक्रमेणरक्तघटोत्पत्ति । तत्रचपरमाणव समवायिकारणम् । तेज संयोगोऽसमवायिकारणम् । अदृष्टादिकनिमित्तकारणम् द्व्यणुकादिरूपपरमाणुरूपमसमवायिकारणमितिपीलुपाकवादिनोवैशेषिका : । पूर्वघटस्यनाशंविनैवावयविन्यवयवेषुपरमाणुपर्यन्तेषुयुगपद्रूपान्तरोत्पत्तिरिति। पिठरपाकवादिनोनैयायिका : । अतएवपार्थिवपरमाणुरूपादिकमनित्यमित्यर्थः ॥ अन्यत्रजलादावित्यर्थ . इतितर्कदीपिका ॥

पाकपुटी । स्त्री० कुम्भशालायाम् । आवा इ० भा० ॥ इ० हेमचन्द्रः ॥

पाकफल: । पुं० पानीयामलके ॥

पाकमत्स्य : । पुं० व्यञ्जनविशेषे । मत्स्यले ॥

पाकयज्ञ' । पुं० ब्रह्मयज्ञादन्येषुपञ्चमहायज्ञान्तर्गतेषुवैश्वदेवहोमबलिकर्मनित्यश्राद्धाऽतिथिभोजनात्मकेषुचतुर्षु ॥ स्वर्गापवर्गयो सिद्धि पाकयज्ञेप्रयच्छति इतिफलसमुच्चितस्य । प्रत्येकफलमुक्त हारीतेनयद्देवेभ्योजुहोतिदेवलोकंतेनजयतियत्पितृभ्योददातिपितृलोकंतेनजयति०यत्स्वाध्यायमधीतेऋषिलोकंतेनजयति यद्भूतेभ्योबलिंहरतिभूतलोकंतेनजयतीति ॥ धन्यंयशस्यमायुष्यंस्वर्ग्यंस्यातिथिपूजनम् इतिमनु ' ॥ अत्रभ्रात्रादीनामविभक्तानामपिसंसृष्टानांमुख्येनैकेनैवपाकयज्ञा कर्त्तव्या . । यदाह : । एकपाकेनिवसतांपितृदेवद्विजार्चनम् । एकभवेद्विभक्तानांतदेवस्याद्गृहेगृहे इति एकपाकेनिवसतामित्यु,पक्रम्यसंसृष्टानामित्यभिधानाद्विभक्तानामितिद्रव्यपार्थक्यपर ॥ अष्टकादिषु ॥ वृषोत्सर्गगृहप्रतिष्ठादीनांहोमे । चरुहोमाङ्गकर्मणि ॥

पाकयज्ञिक . । पु० पाकयज्ञकर्तरि ॥

पाकरञ्जनम् । न० तेजपत्रे ॥

पाकल : । पुं० कुञ्जरज्वरे ॥ बोधनद्रव्ये ॥ अनिले ॥ वह्नौ ॥ पाकंलाति । ला० । आतोनुपेतिक : ॥ न० । कुष्ठौषधौ ॥ त्रि० । व्रणादिपाककारक

रिथि ॥

पाकली । स्त्री० कर्कव्यां ॥

पाकशाला । स्त्री० महानसे । रसवत्याम् । रसोई० इ० भा० ॥ अग्निकोणेतस्याः कर्त्तव्यतोक्ता । प्राच्यां दिशिस्नानगृहमाग्नेय्यां पचनालयम् । शयनयाम्यदिग्भागेनैर्ऋत्यांशस्त्रमन्दिरम् ॥ प्रतीच्यांभोजनगृहं वायुभागेसभागृहम् । भाण्डारसदनसौम्ये त्वैशान्या देवतालयमिति पीयूषधारायाकश्यप . ॥

पाकशासन ' । पुं० इन्द्रे ॥ पाकस्यद्वन्द्वभातु . शासन ' । शासयति । शासु० । णिजन्त . न० ल्यु० ॥

पाकशासनि ' । पुं० इन्द्रात्मजे । जयन्ते ॥ पाकशासनस्यापत्यम् अत इञ् ॥

पाकशुक्ला । स्त्री० कक्खट्याम् ॥

पाकस्थानम् । न० महानसे ॥ पाकस्य स्थानम् ॥

पाकस्थाली । स्त्री० रन्धनपात्रे ॥ पाकस्यस्थाली ॥

पाका । स्त्री० वालिकायाम् ॥ अजा० टाप् ॥

पाकाभिमुखः । त्रि० सिदृध्युन्मुखे ॥

पाकारि . । पु० श्वेतकाञ्चने ॥

पाकिमम् । त्रि० पक्तिमे ॥ पाकेननिर्वृत्तम् । भावप्रत्ययान्तादिमप् ॥

पाकिमा । पुं० पाकतायाम् ॥ पाकस्य भाव : । इमनिच् ॥

पाकुक : । पु० सूपकारे ॥ पचति । डुपचष्० । पचिनशोर्णुकानूकनुमौ चेतिसाधु ॥

पाक्यम् । न० विड्लवणे । खारीलूण इ० भा० ॥ पुं० यवक्षारे ॥ त्रि० । पक्तव्ये ॥ पच्यते । डुपचष्० । ऋहलोर्ण्यत् । चजोरितिकुत्वम् ॥ पाकेसाधुवा । तत्रसाधुरितियत् ॥

पाक्षिक ' । त्रि० पक्षपातिनि ॥ पक्षिघातके । शाकुनिके ॥ पक्षेणनिर्वृत्तम् । ठञ् ॥ पक्षिणोहन्ति । पक्षिमत्स्यमृगान्हन्तीतिठक् ॥ पक्षभवे ॥

पाखण्ड : । पुं० पाषण्डे । सर्वलिङ्गिनि ॥ पाखण्डयति । खडिभेदने । पचाद्यच् ॥ यथा । पालनाच्चत्रयीधर्मं ' पाशब्देननिगद्यते । तत्खण्डयन्तितेयस्मात्पाखण्डास्तेनहेतुना ॥ नानाव्रतधरानानावेशाः पाखण्डिनोमताः ॥ एषांवाङ्मात्रेणाप्यर्च्चननिषिद्धम् । यथाहमनु । पाखण्डिनोविकर्मस्थान्वैडालव्रतिकान् शठान् । हैतुकान्वकवृत्तींश्चवाङ्मात्रेणापिनार्चयेदिति ॥ ( * ) ॥ निशामुखेषुखद्योता स्तमसाभान्तिनोग्रहाः । यथापापेनपाखण्डा न हिवेदाः कलौयुगे ॥ इतिभागवतम् ॥

पागल ' । पुं० उन्मत्ते । वातुले ॥ य

पीढा० पीढी० इत्यादिभाषा ॥

पीडनम् । न० अवमर्द्दे । देशादेरुप द्रवदाने । शस्यादिसम्पन्नदेशस्यपर चक्रेणपीडने ॥ दुःखे ॥ भरणपो ष्यवर्गस्यप्रशस्तं स्वर्गसाधनम् । नर कपीडनेचास्यतस्माद्यत्नेनतभरेत् ॥ मर्द्दने । टीपना फींचना भीचना इत्यादिभाषा । यथा । गर्भाभिघा तादमसाशनपीडनाद्यैःपक्वद्रुमादि वफलंपततिक्षणेनेति ॥ पीडअवगा हने । ल्युट् ॥

पीडा । स्त्री० बाधायाम् । व्यथायाम् दुःखे । पीडयति पीडअवगाहने । चु० । भिदाद्यङ् । णिजभावेगुरो श्चेत्य० । टाप् । कृपायाम् ॥ शि रोमालायाम् । उत्तंसे ॥ सरलद्रु मे ॥ इतिमेदिनी ॥

पीडितम् । न० स्त्रीणाकरणे ॥ त्रि० । यन्त्रिते ॥ बाधिते ॥ मर्द्दिते ॥ पीडासञ्जातास्य । ता० इतच् ॥

पीत । पु० गौरे । हरिद्राभे । पीला इतिहल्दिया इतिचभाषा ॥ कु- सुम्भे ॥ अङ्कोटे ॥ आखोटे ॥ पुष्प रागे ॥ न० पाने ॥ हरिताले ॥ त्रि० पीतवर्णवति ॥ कृतपाने ॥ पिवतिवर्णान्तरम् । औणादिकःक्त. ॥ पीयते चक्षुषायम् । पापाने । क्त. । घुमास्थेतीत्वम् ॥ पीतागावश्च स्यचतु० पीतपानम्० आसामस्ती तिमत्वर्थीयोऽर्श आद्यजित्यच्प्रत्य योबोध्य । यद्दोत्तरपदलोपोपीच्द्रष्ट व्य । पीतोदका पीता । अत्री दकस्यपीतत्त्वं गोषूपचर्यते ॥

पीतकम् । न० ताले । हरिताले ॥ अ गुरुणि ॥ पद्मकाष्ठे ॥ पित्तले ॥ माक्षिके ॥ नन्दीवृक्षे ॥ कुङ्कुमे ॥ हरिद्रुवृक्षे ॥ किङ्किरातद्रुमे ॥ शो नाके ॥ पीतशाले ॥ त्रि० पीतेनर क्तं ॥ पीतात्कन् ॥ यद्वा । स्वार्थे यावादिभ्य कन् ॥ पीतचन्दने ॥

पीतकदली । स्त्री० स्वर्णकदल्याम् ॥

पीतकद्रुम । पु० हरिद्रुवृक्षे ॥

पीतकन्दम् । न० गर्जरे ॥

पीतकरवीरक । पु० पीतवर्णकरवी रपुष्पवृक्षे । पीतप्रसवे । सुगन्धिकु सुमे ॥

पीतकावेरम् । न० कुङ्कुमे ॥ पित्तले ।

पीतकाष्ठम् । न० पीतचन्दने ॥

पीतकीला । स्त्री० आयर्त कीलतायाम् ॥

पीतघोषा । स्त्री० पीतपुष्पघोषालतायाम् । धामार्गवे । महाजाल्याम् ॥

पीतचन्दनम् । न० पीतवर्णचन्दने । कालीयके । माधवप्रिये । कालानु सार्यके ॥ हरिद्रायाम् ॥

पीतचम्पक : । पुं० प्रदीपे ॥ पीतव र्णचम्पकपुष्पवृक्षे ॥

पीततण्डुल : । पु० कङ्गुन्याम् ॥

पीततण्डुला । स्त्री० बृहतीप्रभेदे । चविकावृक्षे । पुत्रप्रदायाम । बहुफलायाम् ॥

पीततुण्ड । पु० कारण्डवखगे ॥ सुगृहे ॥

पीततैला । स्त्री० महाज्योतिष्मत्याम् ॥ ज्योतिष्मतीलतायाम् ॥

पीतदारु । न० देवदारुणि ॥ पीतघृतदारुच ॥ हरिद्रौ ॥ सरले ॥

पीतदुग्धा । स्त्री० हेमचीर्याम् ॥ पीतदुग्धमस्या ॥ धेनुष्यायाम् ॥

पीतद्रु : । पु० दारुहरिद्रायाम् ॥ पीतद्रवति । द्रु गतौ । मितद्वादिस्वाट्ड ॥ पीतश्चामौद्रु श्चवा ॥ सरलवृक्षे ॥

पीतन । पु० आम्रातके ॥ प्लक्षे ॥ न० पीतदारुणि ॥ कुङ्कुमे । हरिताले ॥ पीतकरोति । तत्करोतीति णिच् । बहुलमन्यत्रापीतियुच् । ल्युर्वा ॥ यद्वा । पीयते । पीङ्पाने । वा० तनन्० गुणाभावश्च ॥ पीतवर्णनयतैवा । नयगतौ । डीज् वा । अन्येभ्योपीतिड ॥

पीतनक : । पुं० आम्रातके ॥

पीतनी । स्त्री० शालपर्ण्याम् ॥

पीतपर्णी । स्त्री० वृश्चिघन्याम् ।

पीतपादा । स्त्री० शारिकापक्षिणि ॥ पीतचरणयुक्ते ॥

पीतपुष्प । पु० चम्पकवृक्षे ॥ कर्णिकारे ॥ पिण्डीतकप्रभेदे ॥ पीतभिण्ट्याम् ॥ कूष्माण्डे ॥ पीतानि पुष्पाण्यस्य ॥ न० । आहुल्यवृक्षे ॥ हरिद्राभकुसुमे ॥

पीतपुष्पा । आढक्याम् ॥ इन्द्रवारुण्याम् ॥ भिन्नभिरिष्टाक्षुपे ॥ कर्कोटक्याम् ॥

पीतपुष्पी । स्त्री० शङ्खपुष्याम् ॥ पीतवाव्यालकी ॥ सहदेव्याम् ॥ महाकोषातक्याम् ॥ त्रपुषम्याम् । राजकोशातक्याम् ॥

पीतफल: । पु० शाखोटवृक्षे ॥ कर्मरङ्गवृक्षे ॥ पीतानिफलान्यस्य ॥

पीतफलक . । पुं० शाखोटवृक्षे ॥

पीतवालुका । स्त्री० हरिद्रायाम् ॥ पीतवर्णसिकतायाम् ॥

पीतभद्र : । पु० किङ्किरातै ॥

पीतभृङ्गराज : । पु० स्वर्णभृङ्गारे । हरिप्रिये ॥

पीतमणि । पुं० पुष्परागे ॥ गोमेदे ॥

पीतमस्त । पुं० खगान्तरे । कलिकारे ॥

पीतमाक्षिकम् । न० मधुप्रभेदे ॥

पीतमुण्ड. । खगविशेषे । कलिकारे॥

पीतमुद्ग : । पुं० वसौ । प्रवेले । शारदे । सोनामूगा इ० भा० इ० हि० ॥

पीतमूलकम् । न० गर्जरे ॥ इ० रा० नि० ॥

पीतयूथी । स्त्री० स्वर्णयूथ्याम् । सोनजुही० भा० ॥

पीतरत्न । पुं० पुष्परागमणौ ॥
पीतरत्नम् । न० गोमेदमणौ ॥
पीतराग । पु० पीतवर्णे ॥ किञ्जल्के ॥ सिक्थके ॥ त्रि० । पीतवर्णवति
पीतरोहिणी । स्त्री० काश्मर्याम् ॥
पीतल । पुं० पीतवर्णे ॥ त्रि० तद्वति ॥
पीतलकम् । न० पित्तले ॥ इ० रा० ॥
पीतलोहम् । न० पित्तलभेदे ॥
पीतवासा । पु० श्रीकृष्णे ॥ त्रि० पीतवस्त्रवति ॥
पीतवीजा । स्त्री० मेथिकायाम् । पीतानिवीजानियस्याः ॥ त्रि० पीतवर्णवीजयुक्ते ॥
पीतवृक्ष । पु० श्योनाकप्रभेदे ॥ सरलवृक्षे ॥
पीतशाल । पु० असनवृक्षे ॥
पीतसार । पु० मलयजे ॥ गोमेदकमणौ ॥ तुरुष्के ॥ वीजके ॥ अङ्कोठवृक्षे ॥ न० हरिचन्दने ॥
पीतसारक । पु० सर्जकवृक्षे विजयसारइतिख्याते ॥ पीत. सारोस्य ॥ निम्बवृक्षे ॥ अङ्कोठवृक्षे ॥ इ० रा० नि० ॥
पीतसारि । न० स्रोतोञ्जने ॥
पीतसालक । पु० सर्जकवृक्षे । असने । बन्धूके । विजयसार० इ० ख्याते ॥ पीत: सारोऽस्य । रलयोरैकत्वम् ॥
पीतस्फटिक । पुं० पुष्परागमणौ ॥

पीता । स्त्री० हरिद्रायाम् ॥ दारुहरिद्रायाम् ॥ महाज्योतिष्मत्याम् ॥ कपिलशिंशपायाम् ॥ प्रियङ्गौ ॥ गोरोचनायाम् ॥ अतिविषायाम् ॥ पीयतेस्म । पीङ्पाने० पापानेवा । कर्मणिक्त । घुमास्थेतीत्वम् ॥
पीताङ्ग । पु० श्योनाकप्रभेदे ॥
पीताब्धि । पुं० अगस्त्यमुनौ ॥ पीत अब्धिर्येनस ॥
पीताभम् । न० कालीयके । हरिचन्दने ॥ पीताआभायस्यतत् ॥ त्रि० । पीतकान्तौ ॥
पीताम्बर । पु० अच्युते । विष्णौ ॥ पीतमम्बरयस्यस ॥ शैलूषे ॥ न० हरिद्राभवसने ॥ पीतवर्णकौषेयवस्त्रे ॥ त्रि० पीतवस्त्रयुक्ते ॥
पीताम्बरा । स्त्री० बगलादेव्याम् ॥
पीताश्मा । पुं० पुष्परागमणौ ॥
पीति । पु० घोटके । तुरगे ॥ द्रुत्यमर ॥ पिबति । पापाने । क्तिच् । घुमास्थेतीत्त्वम् ॥
पीति । स्त्री० पाने । द्रवद्रव्यस्यगलाध:करणे ॥ इतिमेदिनीकर । पानम् । पा० । स्त्रियांक्तिन् । घुमास्थेतीत्त्वम् ॥ शुण्डायामिति शब्दचन्द्रिका ॥
पीतिका । स्त्री० पीतयूथ्याम् ॥ दारुहरिद्रायाम् ॥ हरिद्रायाम् ॥
पीतु : पुं० । सूर्ये ॥ वह्नौ ॥

पिबति । पा० । प किच्चेति तुन् ॥

पीथ । पुं० अर्के ॥ अग्नौ ॥ काले ॥ न० । जले ॥ घृते ॥ पिबति । पा० । पातृतुदीत्यादिनाथक् ॥

पीथि:। पुं० घोटके ॥

पीन । त्रि० स्थूले ॥ प्यायतेस्म । ओप्यायीवृद्धौ । गत्यर्थेतिक्त: । ओदितश्चेतिनत्वम् । प्याय' पीभाव:॥

पीनस । पुं० रोगविशेषे । नासा सं.वे । प्रतिश्यागे ॥ अस्यनिदान म् ॥ यथा । आनह्यतेयस्यविशु ष्यतेचप्रक्लिद्यतेधूप्यतिचैवनासा । नवेत्तियोगन्धरमाश्चजन्तुर्जुष्ट व्यव स्येत्खलुपीनसेन ॥ तच्चानिलश्ले ष्मभवविकारब्रूयात्प्रतिश्यायसमा नलिङ्गम् ॥ अस्यौषधम् । यथा । पिप्पलीत्रिफलाचूर्णमधुसैंधवसयुत म् । सर्वरोगज्वर श्वासशोषपीन सद्दन्नवेत्इति ॥ पीनस्यति० सा यतिवा . षोअन्तकर्मणि० पैत्र येवा । आतोनुपेतिक ॥

पीनसा । स्त्री० कर्कट्याम् ॥ इ० रा० नि० ॥

पीनसी । त्रि० पीनसरोगिणि ॥

पीनस्कन्ध . । पु० महिषे ॥

पीनोध्नी । स्त्री० पीवरस्तन्याङ्गवि ॥ पीनमूधोऽस्या । ऊधसोऽनङ् । बहुव्रीहेरूधसोङीष् ॥

पीपरि । पु० कुलत्ये ॥ इ० रा० नि० ॥

पीयु .। पु० काले॥ रवौ ॥ घूके । पेचके ॥ सुवर्णवायसयोरिति दीधित ' ॥ पिबति । पा० । खरु शङ्कुपीयुनीलङ्गुलिगु० इतिकुप्र त्यय . धातोरीत्वयुगागमश्च ॥

पीयूषम् । न० अमृते ॥ अमृतायाम् । गुडूच्याम् ॥ यथा । पीयूष लोकप.श्च।लोचरगा नाकणायद्य इ० लोलिम्बराज ॥ दुग्धे ॥ पु० न० नव्यसूतधनो सप्तदिवसावधि क्षीरे । पेयूषे ॥ पीयते० पीय्य ते० अनेनवा । पीय इ० सौत्रो धातु . प्रीतौ । पीयेरूषन् ॥

पीयूषमहा . । पु० चन्द्रे ॥ इ० श० रत्नावली ॥

पीयूषरुचि । पुं० चन्द्रे ॥ त्रि० । अमृतप्रिये ॥

पीलक:। पु० पिपीलिकायाम् ॥ इ०हेमचन्द्र ॥

पीलु:। पु० प्रसूने॥ परमाणौ ॥ मतङ्गजे ॥ तालस्यास्थिखण्डे ॥ काण्डे । वाणे ॥ अजादिदेशेषु खनाम्नाप्रसिद्धे पादपविशेषे । गुड फले ॥ कृमिविशेषे ॥ पुष्पद्रुमे ॥ पीलयति । पीलप्रतिष्टम्भे । मृगय्वादित्वात्कु ॥ न० पीलुवृक्ष

स्थफले । पीलू॰ क्ली॰ भा॰ ॥ पीलु श्लेष्मसमीरघ्न पित्तलंभेदिगुल्मनुत् । स्वादुतिक्तञ्चयत्पीलुतन्नात्यु,ष्णं त्रिदोषहृत् ॥

पीलुकः । पु॰ मधूकप्रभेदे ॥

पीलुकुणः । पु॰ पीलूनांपाके ॥ तस्य पाकमूलइत्यादिनाकुणप्प्रत्यय. ॥

पीलुनी । स्त्री॰ मूर्वायाम् ॥

पीलुपत्र । स्त्री॰ लताविशेषे । मोरटायाम् ॥

पीलुपर्णी । स्त्री॰ विम्बिकायाम् ॥ मूर्वायाम् ॥ ओषधिभिदि ॥ पीलोरिवपर्णान्यस्याः ॥ पाककर्णेतिङीष् ॥

पीवा । त्रि॰ स्थूले ॥ प्यायते । प्यैङ्वृद्धौ । ध्याप्यो, सम्प्रसारणञ्चेतिक्वनिप् ॥

पीवर । त्रि॰ स्थूले । मोटा इति भाषा ॥ प्यायते । प्यैङ् । छित्वरच्छत्वरेतिवरच् प्रत्ययान्तो निपातितः ॥ पु॰ कूर्मे ॥

पीवरस्तनी । स्त्री॰ स्थूलस्तन्याङ्गवि । पीनोध्न्याम् ॥ पीनस्तनविशिष्टायानार्याम् ॥ पीवरा, स्तना, पीवरौवास्तनौयस्याः, स्वाङ्गाच्चोपसर्जनादितिङीष् ॥

पीवरा । स्त्री॰ अश्वगन्धायाम् ॥ शतावर्याम् ॥ स्थूलायाम् ॥

पीवरी । स्त्री॰ शालपर्ण्याम् ॥ शतमूल्याम् ॥ प्यायते । प्यैङ् । ध्याप्यो. सम्प्रसारणञ्चेतिक्वनिप् स्त्रियावनोरचेङीब्रौ ॥

पुंध्वज । पु॰ गन्धमूषिके ॥

पुंश्चल । पु॰व्यभिचारिणि ॥ यथा ॥ ललाटोपस्रतास्तिस्रोरेखा स्युःशतवर्षिणाम् । नृपत्त्व स्याच्चतस्रभिरायुःपञ्चनवत्यथ ॥ अरेखिणायुर्नवतिर्विच्छिन्नाभिश्चपुंश्चल' ॥ क्ली॰गरुडपु॰

पुंश्चली । स्त्री॰ व्यभिचारिण्याम् । अतिचञ्चलायाम् । असत्याम् ॥ तस्याश्चरित्रदोषायथा । अहोकोविदभुवनेदुर्ज्ञेयपुंश्चलीमन' । पुंश्चल्यायोद्दिविश्वस्तोविधिनासविडम्बित. ॥ वह्निश्च्युतस्ययशसाधर्म्मोणास्वकुलेनच । वाञ्छित नूतनप्राप्य विनश्यतिपुरातनम् ॥ सदासकर्म्मसाध्यासाकोशातस्या प्रियोऽप्रिय । देवेकर्म्मणि पैत्रेचपुत्रेवस्त्रौनभर्त्तरि ॥ दारुणापुंश्चलीचित्त सदाशुङ्गारकर्म्मणि । प्राणाधिकरतिज्ञसाऽमृतदृष्ट्याहिपुंश्चली ॥ रत्नप्रदश्चविज्ञविषदृष्ट्याहिपश्यति । सर्वेषास्थलमस्त्येवपुंश्चलीनानकुत्रचित् ॥ दारुणापुंश्चली जातिर्नरजातिश्च एवच ॥ निष्कृति कर्मभोगान्ते सर्वेषामस्तिनिश्चितम् ॥ नपुंश्चलीनाविप्रेन्द्रयावच्चन्द्रदिवाकरौ । अन्यासाकामिनीनाश्चकीटंहन्तुंस्वया

ट्या । सानास्तिपुंश्चलीनाञ्चकान्तं हन्तुपुरातनम् ॥ रतिश्चनूतनप्राप्यविषतुल्यपुरातनम्। कान्तं हत्वा हिनस्त्येवसोपायेनावलीलया ॥ * ॥ पृथिव्यायानिपापानिपुंश्चलीष्वेव-भारते । तिष्ठन्तिताभ्योनपराः पापिष्ठा सन्तिकेचन ॥ (*+*) ॥ पुंश्चलीपरिपक्वान्नसर्व्वं पातकमिश्रितम् । देवेकर्म्मणिपैत्रेचदेयनचतथाजलम् ॥ अन्न विष्ठापयोमूत्रपुंश्चलीनाञ्चनिश्चितम् । दत्वापितृभ्योदेवेभ्योभुक्त्वाचनरकंव्रजेत् ॥ शतवर्षंकालसूत्रेपचत्येवसुदारुणे । घोराश्चकारिकृमयस्तं दशन्तिदिवानिशम् ॥ पुंश्चल्यन्नश्चयोभुङ्क्तेदैवाद्द्विजनराधम ॥ एतज्जन्मकृतपुण्यतस्यनश्यतिनिश्चितम् ॥ आयुः श्रीयश्सांहानिरिहलोकेपरत्रच । तस्माद्यत्नाद्द्वर्णीयपाकपात्रं कलत्रकम् ॥ ( *‡*+ ) ॥ पुंश्चलीदर्शने पुण्ययाचास्तिविर्भवेद्ध्रुवम् । स्पर्शने चमहापापं तीर्थस्नानाद्विशुध्यति ॥ स्नानदानव्रतश्राद्धवजपश्चदेवपूजनम् । निष्फलपुंश्चलीनाञ्चभारतेजीवनन्तथा ॥ (*०+०*) ॥ उपस्थितसकामपुंश्चलीत्यागेदोषोयथाभवत्सुपस्थिताकामात्पुंश्चलीचेज्जितेन्द्रिय. परित्यजेद्धर्म्मभयादधर्मान्नरकंव्रजेत् ॥ (+०*०+) ॥ सर्वदेवतसाक्षपक्षित्याज्यत्वगर्हितत्वंचयथा । उपस्थिताचयायोषिदत्याज्याराणियामपि । श्रुतौश्रुतमितित्याज्यासर्वदेवतपक्षिनाम् ॥ अतोसर्वा ' परित्याज्या पुंश्चलीचविशेषतः । भनायुः प्राणयशसानाशिनीदुःखदायिनी ॥ स्वकार्यतत्पराशश्वत्परकार्यविघातिनी । निष्ठुरानरघातिभ्य सर्वापहीजरूपिणी ॥ विद्युद्दीप्तिर्जलेरेखालोभान्मैत्रीयथाभवेत् । परद्रोहाद्यथासम्पत्कुलटाप्रेमतत्परम् ॥ सर्वेभ्योहिस्रजन्तुभ्योविषहीजासदैवसा । योविश्वसितुंतासम्मूढोविपत्तस्यपदेपदे ॥ इतिब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे २३ । २४ । ७२ अध्यायः ॥ पुंसोभर्त्तुः सकाशाच्चलति०पुरुषान्तरगच्छति । चलगती । अच् । गौरादि ॥

पुंश्चिह्नम् । न० शिश्ने ॥

पुंसवनम् । न० दुग्धे । गर्भे ॥ संस्कारविशेषे ॥ द्वितीयेवातृतीयेवा मासिपुंसवनंभवेत् । व्यक्तेगर्भेभवेत्कार्यंसीमन्तेनसहाथवा ॥ पुमान् सूयतेऽनेन । पुञ्० । ल्युट् ॥

पुंस्त्वम् । न० रेतसि । शुक्रे ॥ पुरुषत्वे ॥

पुंस्त्वविग्रहः । पुं० भूतृणे ॥

पुक्कस । पु० श्वपचे ॥ अधमे ॥ पुत्कुत्सितम् पुण्यं वापुमांसवाकस

ति । कसगतौ । अच् । मू० कोवा ॥ पृ० । निषादाच्छूद्रायाजाते । जातानिषादाच्छूद्रायाजात्याभवति पुक्कस ॥

पुक्कसी । स्त्री० कालिकायाम् ॥ नील्याम् ॥

पुङ्ख । पु० मङ्गलाचारे ॥ शराङ्गे । बाणमूले ॥ श्येने ॥

पुङ्खानुपुङ्खम् । न० मङ्गलामङ्गले ॥ यथा । पुङ्खानुपुङ्खविषयेक्षणतत् परोपिधीरोनमुञ्चति मुकुन्दपदार विन्दे । सङ्गीतनृत्यगलितालवशग तापि मौलिस्थकुम्भपरिरक्षणधीन टीवति ॥

पुङ्ग । पु० न० पुञ्जे ॥ इतिशब्द चन्द्रिका ॥

पुङ्गज । पु० आत्मनि ॥ इतिभूरि प्रयोग . ॥

पुङ्गव । पुं० बलीवर्दे । वृषे ॥ पुमांश्चासौगौश्च ।गोरतद्धितलुकीति टच् ॥ औषधस्यप्रभेदे ॥ उत्तरपद स्थ श्रेष्टे ॥ ऋषभौषधे ॥ मन्त्री च ॥ पुरुषर्षभे ॥ पुमान्गौरिव । उपमितिसमास । पूर्ववत्टच् ॥

पुच्छ । पुं० पश्चात्प्रदेशे ॥ पुं०न० लाङ्गूले ॥ न० कलापे । समूहे । लोमवल्लाङ्गूले ॥ पुच्छति । पुच्छप्र सादे । प० अच् । पृ० । पुच्छभा ण्डेतिनिपातनाद्वायसाप : ॥

लौचटकाना० इतिभा० ॥

पुच्छदा । स्त्री० । लक्ष्मणाकन्दे ॥ इ० राजनिर्घण्ट . ॥

पुच्छी । पुं० कुक्कुटे ॥ अर्कवृक्षे ॥ त्रि० । लाङ्गूलवति ॥

पुञ्ज । पु० राशौ । धान्याद्युच्छ्रित वृन्दे ॥ पिञ्जयति० पिञ्ज्यतेवा । पिजिहिंसा बलादानिकेतनेषु । अच्०घञ्वा । पृ० । यद्वा । उन्न-त्यापुमांसजयति । अन्ये० ड ॥

पुञ्जकस्थली । स्त्री० अप्सरोविशेषे ॥

पुट । पुं० बालपत्रे ॥ न० । जा तीफले ॥ उपर्यधोभवापन्नसंयुक्तस्थ दादिकपालद्वयरूपौषधपाकपात्रे ॥ धात्वादिमारणोपयुक्तान्पुटप्रकारा नाहरसप्रदीप । लोहादेरपुनर्भा व स्तद्गुणत्व गुणाच्यता । सलिले तरणञ्चापिततस्सिद्धि पुटनाम्नकात् ॥ गम्भीरेविस्तृतेकुण्डे द्विहस्ते चतु रस्रके । वनोपलसहस्रे णपूरितेपुट मौषधम् । कोष्ठिकेव प्रयत्नेनगोवि ष्ठोपरिधारयेत् । वनोपलसहस्रा र्द्धं कोष्ठिकोपरिनि क्षिपेत् ॥ व ह्निं विनि : क्षिपेत्तन्महापुटमिति स्मृतम् ॥ १ ॥ कोष्ठ भूषा । गो विष्ठा० गोष्ठा ॥ +*‡* ॥ सपादहस्तमानेनकुण्डे निम्ने तथा यते । वनोपलसहस्रं चापूर्णमध्ये विधारयेत् ॥ पुटनद्रव्यसंयुक्ताको

ष्ठिकामुद्रितांमुखे । अधोर्द्धानिकरगडानिश्चर्द्धान्युपरिनिक्षिपेत् ॥ एतद्गजपुटप्रोक्तख्यातसर्वपुटोत्तमम् । हस्तश्चतुर्विंशत्यङ्गुलप्रमाणससपाद तेनत्रिंशदङ्गुलप्रमाणेनेत्यर्थं अतएवोक्तम् । साधारणेनराङ्गुल्यात्रिंशदङ्गुलकोणज । करण्डानि० आरण्यागोमया । इ० गजपुटम् ॥ २ ॥ (++++)— अरत्निमात्रकेकुण्डेपुटवाराहमुच्यते ॥ ३ ॥ वितस्तिमातृके खातेकथितञ्चौकुटपुटम् ॥ ४ ॥ अरत्निस्तुनिष्कनिष्ठेनमुष्टिना । इत्यमर । निसृतकनिष्ठयामुष्ट्योपलक्षितोहस्तोऽरत्निरित्यर्थं ॥ षोडशाङ्गुलकेखातेकस्यचित्कौकुटपुटम् ॥ यत्पुटदीयतेखातेह्यष्टसङ्ख्यैर्वनोपलै । कपोतपुटमेतत्तु कथितपुटपण्डितै : ॥ ५ ॥ गोष्ठातर्गोखुरक्षुण्णशुष्कचूर्णितगोमयम् । गोवरतत्समाख्यातवरिष्ठरससाधने ॥ द्दङ्गाण्डस्थितैर्यत्रगोवरैर्दीयते पुटम् । तज्ञोवरपुटप्रोक्तंभिषग्भि सूतभस्मकृत् ॥ ६ ॥ द्दङ्गाण्डेतुषै पूर्णे मध्ये मूषाविधारयेत् । क्षिप्त्वाग्निमुद्रयेद्भाण्ड तद्भाण्डपुटमुच्यते ॥ ७ ॥ इति भावप्रकाश' ॥ पु० । न० । अश्वखुरे । २ ॥ आच्छादने ॥ पत्रादिरचितेपुष्पाद्याधारे । पुडा० इति० दोना० इतिचभा० । मिथसश्लेषे ॥

पुटकम् । न० पद्मे ॥ इतिशब्द० ॥

पुटकन्द । पु० कोलकन्दे ॥

पुटकिनी । स्त्री० पद्मिन्याम् ॥ पुटकानिसन्त्यस्यपुष्करादिभ्योदेशइतीनि ॥

पुटग्रीव । पुं० गर्गर्याम् ॥ ताम्रकुम्भे ॥

पुटपाक । पु० पुटान्तरितौषधपचने ॥ अस्यविधिर्यथा ॥ पुटपाकस्यकल्पस्यस्वरसोगृह्यतेयत । अतस्तुपुटपाकानायुक्तिरत्रोच्यतेमया ॥ पुटपाकस्यपाकोय लेपस्याङ्गारवर्णता ॥ लेपञ्चद्व्यङ्गुलस्थूलकुर्याद्द्व्याङ्गुलिमात्रकम् । काश्मरीवटजम्ब्वादिपत्रैर्वेष्टनमुत्तमम् । पलमात्रोरसोग्राह्य कर्षमात्र मधुक्षिपेत् । कल्कचूर्णद्रवाद्यास्तुदेया कोलमितावुधै ॥ ०० ॥ अपिच । इ विल्वे स्निग्धमासस्यपरद्रव्य पलमतम् । द्रवस्यकुडवोन्मानसर्वमेकत्रपेषयेत् ॥ तदेकत्रसमालोड्यपत्रै , सुपरिवेष्टितम् । पुटपाकविधानेन तत्पक्त्वातद्रसबुध , ॥ तर्पणोक्तेन विधिनायथावदवधारयेत् । दृष्टिमध्ये निषिच्य , स्थान्नित्यमुत्तानशायिना ॥ कृनोलेखनश्चैवरोपणश्चेतिसत्रिधा । स्नित , स्निग्धोविरूढस्यस्निग्ध

स्वसतुलेखन'॥ इष्टे वेलार्थमितर' पित्तासगन्नणवातनुत्। द्रुतरोरोप ण'। त्वे इमांसवसामज्जमेद स्वा द्वौषधै. क्वत:॥ स्वे इन: पुटपा क: स्य द्वधार्योहि वाकग्रतेतुस:। वाक्ग्रतक्षोटिकाग्रतम्। जाङ्गला नायकन्नमांसैर्लेखनद्रव्यसयुते.॥ क्रणालोहरजस्ताम्रशङ्खविद्रुमसिन्धु जै.। समुद्रफेनकासीस स्रोतोजद धिमस्तुभि॥ लेखनोवाक्कृततस्य परधारणमिष्यते। स्तन्यजाङ्गल म धाज्यतिक्तकद्रव्यभावित॥ लेखना त्त्रिगुणोधार्य. पुटपाकस्तुरोपण। तिक्तकद्रव्याख्याह। निम्बामृता कृषपटोलनिदिग्धिकाभि' स्यात्पञ्च तिक्तकइतिप्रथितोगुणोयम्। वाच देसर्पणोक्तास्तुक्रियाव्यापत्तिदर्शने।व्यापत्तिदर्शने। मिथ्याक्तत पुटपा कजनितव्याधिदर्शने। तेजास्यनिल माकाशमादर्शभास्करांश्च। नेत्रे ततपि तेनैव यस्रवापुटपाकवान्॥ इति भावमिश्र.॥

पुटपाकजम्। न० माससाव्यञ्जनान्त रे॥ गुरुयन्त्रेणयत्पक्व' तज्ज्ञेयं पुटपाकजम्॥

पुटभेद.। पुं० नदीवक्रे॥ पत्तने। नगरे॥ आतोद्ये॥ तटिनीमुखे॥ चक्राकारेणजलानामधोयाने॥ पु टंसश्लिष्ट भिनत्ति। भिदिर०।कर्म ण्यण्॥ पाषाणविशेषे॥ पुटे पुटे भेद्यते इ०॥

पुटभेदक:। पुं० पाषाणविशेषे॥

पुटभेदनम्। न० पत्तने। स्थानीये। नगरे॥ पुटानिपानाणिभिद्यन्ते ऽत्र। भिदिर्०। अधिकरणेल्युट्। युक्त्वा॥

पुटालु'। पुं० शूकरकन्दे। कोल कन्दे॥

पुटिका। स्त्री० एलायाम्॥

पुटितम्। न० अहिपुटे॥ हस्तपुटे। त्रि०। पाटिते॥ स्यूते॥

पुटी। स्त्री० कौपीने॥ आच्छादने॥ पत्रादिनिर्मितपुष्पाद्याधारे। पुडि या० पुडी० इ० भा०॥ गौ० डीम्॥

पुटोटजम्। न० श्वेतच्छत्रे॥ इ० त्रिकाण्डशेष॥

पुटोदक। पुं० नारिकेले॥ इ०हा०

पुण्डरी। पुं० हस्तिनामनुष्याणाञ्चच क्षुष्ये क्षुद्रविटपे। शालपर्णीपत्रस मानपत्रे। पौण्डरीके। चक्षुष्ये। सालपुष्पे॥ इ० शब्द०॥

पुण्डरीकम्। न० सिताम्भोजे। सि तच्छत्रे॥ भेषजे॥ पुं०। व्याघ्रे। अग्निदिङ्नागे॥ कोषकारान्तरे॥ सहकारे॥ गणधरे॥ राजिला हौ॥ गजज्वरे॥ मदनवृक्षे॥ कमण्डलौ॥ श्वेतवर्णे॥ शाले

र्जातिविशेषे ॥ कुष्ठविशेषे ॥ तल्ल क्षणम् । सश्वेतरक्तपर्यन्त पुण्डरीकदलोपमम् । सोत्सेधञ्चसरागञ्च पुण्डरीकप्रचक्षते इति० । पुण्डरीकवर्णयोगात्पुण्डरीक । अर्श आद्यच् ॥ पुण्डयति । मण्डिभूषायाम् । पुण्डिच । फर्फरीकादयश्चेत्यरीकम् ॥

पुण्डरीकाक्ष । पुं० विष्णौ । नारायणे । हृत्पुण्डरीकेप्रकाशमानेवासुदेवे ॥ तस्यस्मरणादेवशुचिर्भवति । यथा । अपवित्र ' पवित्रोवासर्वावस्थाङ्गतोपिवा । य स्मरेत्पुण्डरीकाक्षसवाह्याभ्यन्तर शुचिरितिस्मृते ॥ पुण्डरीकमिवाक्षिणीयस्य । वहुव्रीहौसक्थ्यक्ष्णो स्वाङ्गात्षच् । पुण्डरीकेषुअक्षियस्यवा ॥ पुण्डरीकस्थानेअक्षियस्येतिवा ॥ अयमर्थस्तुहरिस्ते साहस्रमितिपुष्पदन्तस्तोत्रे व्यक्त ' ॥ यद्वापुण्डरीकलोकात्मकमक्षति । अक्षूव्याप्तौ । कर्मण्यण् ॥ तत्क्षायतिवा । क्षैक्षये । आतोनुपसर्गेइतिक । अन्येषामपीतिदीर्घ । आङ्प्रश्लेषोवा । ततसुपीतिमूलविभुजेतिक ' ॥ न० । पुण्डर्ये ॥

पुण्डरीयकम् । न० प्रपौण्डरीके । स्थलपद्मे ॥

पुण्डर्यम् । न० प्रपौण्डरीके ॥ पुण्डयति । पुडिखण्डने । अच् । पुण्डस्यार्य्य प्रधानम् । शकन्ध्वादि

पुण्ड्र । पुं० दैत्यविशेषे ॥ इक्षुप्रभेदे । पौंडा० इ० भा० ॥ अतिमुक्तके चित्रे ॥ कृमौ ॥ पुण्डरीके ॥ तिलके । पुष्पवृक्षविशेषे ॥ इक्षुखण्डे ॥ देशविशेषेतु पुण्ड्र ॥ न० । ऊर्द्धपुण्ड्रादौ ॥ पुण्ड्रति । पुडिखण्डने । स्फायितञ्चीतिरक् ॥

पुण्ड्रक । पु० अतिमुक्ते । वासन्त्याम् । माधवीलतायाम् । तिलकवृक्षे । स्थिरपुष्पाख्याम् ॥ इक्षुप्रभेदे । पौण्डा इ० भा० ॥ पुण्डति०पुण्ड्रतेवा । मुडिवन्धने० पुडिच । स्फायीतिरक् । स्वार्थेकन् ॥

पुण्ड्रकेलि । पुं० इभे । हस्तिनि ॥ पुण्ड्रेषुकेलिर्यस्य ॥

पुण्यम् । न० धर्मे ॥ सुकृते ॥ यथा । पण्डितेनापिकिन्तेनसमर्थेनचदेहिनाम् । यत्पुण्य भारमुद्वोढुमशक्त. पारलौकिकमिति ॥ तस्माद्यतेत पुण्येषुयइच्छेन्महतींश्रियनिति ॥ विधिविहिते ॥ सदाचारे ॥ शोभनकर्म्मणि ॥ वि० । शोभने । मनोरमे । सुन्दरे ॥ पावने ॥ शुद्धे ॥ पुनाति० पूयतेऽनेनवा । पूञ् । पूञो यसुङ्ह्रस्वश्चेतियत्णुट्ह्रस्वश्च ॥ यद्वा । पुणति । पुणकर्म्मणिशुभे । इगुपधेतिक । पुणेसाधु । तत्र

साधुरितियत् ॥ दयासम नास्तिपुण्य पाप हिंसासम नहीतिदेवीभागवतम् ॥
पुण्यकम् । न० विधिविहितेउपवासकृच्छ्रचान्द्रायणप्राजापत्यनक्तभोजनादिव्रते ॥पुण्यमेव । सज्ञायांकन्॥
पुण्यकव्रतम् । न० ब्रह्मवैवर्तोक्ते । स्त्रीकर्त्तव्येनियमविशेषे ॥
पुण्यकृत् पुं० अश्वमेधादियाजिनि ॥ आश्रमकर्म्मकृति ॥ त्रि० पुण्यकर्त्तरि । धार्मिके ॥ पुण्यकृतवान् सुकर्मपापमन्त्रपुण्येषुकृञ: इति कृञ क्विप् ह्रस्वस्येतितुक् ॥ पुण्य कारयतिवा । बहुलमन्यत्रापीतिणिलुक् ॥
पुण्यगन्ध । पुं० चम्पके । पुण्योगन्धोऽस्य ।
पुण्यजन: । पुं० यक्षे ॥ राक्षसे ॥ मङ्गलादिवहितत्वलक्षणयापुण्यश्चासौजनश्च ॥ धार्मिके ॥ पुण्याश्रयोजन । मध्यमपदलोपीसमास ।
पुण्यजनेश्वर: । पुं० कुवेरे । त्र्यम्बकसखे ॥ पुण्यजना. यक्षा 'तेषामीश्वर : ॥
पुण्यतृणम् । न० श्वेतकुशे ॥
पुण्यदर्शन : । पुं० चाषपक्षिणि ॥
पुण्यफल: । पुं० वनविशेषे । लक्ष्म्यारामे ॥ न० । धर्म्मजन्यफले ॥
पुण्यभाक् । त्रि० पुण्यविशिष्टे ॥

पुण्यभू । स्त्री० आर्यावर्ते ॥ पुण्यस्यभू । पुण्याचासौभूमिश्चेतिवा ॥
पुण्यभूमि । स्त्री० आर्यावर्ते ॥ पुण्यस्यभूमि: । पुण्याचासौभूमिश्चेतिवा ॥
पुण्यवान् । त्रि० सुकृतिनि । धन्ये ॥ पुण्यमस्यास्ति । मतुप् । मादुपधायाश्चमतोर्वोऽयवादिभ्य इतिवत्वम् ॥
पुण्यश्लोक । पुं० जनार्दने । विष्णौ ॥ नलइतिप्रसिद्धेराजनि ॥ युधिष्ठिरे ॥ पुण्यानिपावनानि श्लोकानियशांसियस्य ॥ पुण्यानिकवीनापद्यानिवायस्मिन् ॥ त्रि० पुण्यचरित्रे
पुण्यश्लोका । स्त्री० द्रौपद्याम् ॥ वैदेह्याम् । सीतायाम् ॥ यथा । पुण्यश्लोकोनलोराजा पुण्यश्लोकोयुधिर. । पुण्यश्लोकाचवैदेही पुण्यश्लोकोजनार्दनइतिपुराणम् ॥
पुण्या । स्त्री० गङ्गायाम् ॥ तुलस्याम् ॥ पुण्यजनिकायाम् ॥
पुण्यात्मा । त्रि० धर्मशीले ॥ पुण्यआत्माऽस्य ॥
पुण्याहम् । न० शोभनदिवसे ॥ पुण्यञ्चतदहश्च । राजाह . सखिभ्यष्टजितिटच् । उत्तमैकाभ्यामित्यन्हादेशोन । पुण्यसुदिनाभ्यामितिक्लीवत्त्वम् ॥ मङ्गले ॥ यथा० पुण्याहवाचनम् ॥
पुण्याहवाचनम् । न० दैवादिकर्मा

द्दौमङ्गलार्थंपुण्याहमितिशब्दस्यवा रत्रयकथने ॥ यथा । पुण्याहवाचन दैवेब्राह्मणस्यविधीयते । एतदेवनि रोङ्कार कुर्य्यात्क्षत्रियवैश्ययो ॥ सोङ्कारंब्राह्मणेब्रूयात्निरोङ्कारमही पतौ । उपांशुचतथावैश्ये शूद्रे स्व स्तिप्रयोजयेदितियम ॥

पुत्तलिका । स्त्री० धातुपाषाणादिनि र्मितमूर्त्तौ । पुतलीइतिभाषा ॥

पुत्तिका । स्त्री० मधुमक्षिकाविशेषे । पतङ्गिकायाम् ॥ यतआह । माक्षि कतैजवर्णंस्यात्तृतवर्णंतुपौत्तिकम् । भ्रामरस्तुभवेच्छुक्ल क्षौद्रन्तुकपिलभ वेत् । इति ॥ पुतकुत्सितंत्रायते । त्रायृसन्तानपालनयो । बाहुलका त्क । यलोप । केयइतिक्रस्व । प्रत्ययस्थादितीत्वम् ॥ पिपीलि काप्रभेदे । दीमकइतिसौंडक०इति चभाषा ॥ यथा । धर्मशर्मे : सच्चि नुयात्परलोकार्थ पुत्तिका । परलो कसहायार्थंभास्वन्त स्वशरीरिणमि ति ॥

पुत्र । पु० लग्नात्पञ्चमभवने ॥ आ त्मजे । तनये । सूनौ । सुते । अप त्ये । पूतइतिभाषा० ॥ अस्यनिरु क्तिर्यथा । पुन्नाम्नोनरकाद्यस्मात्पि तरंत्रायतेसुत.. । तस्मात्पुत्रइति प्रोक्त स्वयमेवस्वयम्भुवेति ॥ स- सारिणोयमवश्यमपेक्षित' । अपुत्र

स्यगतिर्नास्तिस्वर्गेगतुपरन्तप । येन केनाप्युपायेनपुत्रस्यजननंचरेदिति वचनात् ॥ सचद्वादशविधोयथा । पुत्रान्द्वादशयानाहनृणांस्वायम्भुवो मनु । तेषांषड्बन्धुदायादा षड दायादबान्धवा ॥ औरस क्षेत्रज श्चैवदत्त कृत्रिमएवच । गूढोत्प न्नोऽपविद्धश्चदायादाबान्धवाश्चषट् ॥ कानीनश्चसहोढश्चक्रीत पौनर्भव स्तथा । स्वयंदत्तश्चशौद्रश्च षडदाया दबान्धवा इति ॥ पुत्रिकापुत्रेण सहत्रयोदशविधोऽपिभवति ॥ †‡ ॥ जीवतोवाक्यकरणात्क्षयाहेभूरिभो जनात् । गयायांपिण्डदानाच्च त्रि भि पुत्रस्यपुत्रता ॥ ( * ) ॥ चतु र्विधा पुत्रायथा । सुमनोवाच ) । ऋणसम्बन्धिन केचित्केचित्न्या सापहारका । रिपवश्चप्रियाश्चेति स्वकर्मवशवर्तिन ॥ भेदैश्चतुर्भिर्जाय न्ते पुत्रामित्राखियस्तथा । भार्या पिताचमाताचभृत्या स्वजनबान्धवा ॥ स्वेनस्वेनहिजायन्ते सम्बन्धेनम हीतले । न्यासापहारभावेन यस्यय स्यकृतभुवि ॥ न्यासस्वामीभवेत्पु त्रोगुणवान्रूपवान्भुवि । येनचाप हृतन्यासंतस्यगेहेनमशय ॥ न्या सापहारणादुःखसदत्त्वादारुणगत. । न्यासस्वामीसपुत्रोऽभून्न्यासापहार कस्यच ॥ गुणवानरूपवांश्चैवसबल

पुत्र .

लणसयुत । भक्तिश्चदर्शयेत्तसा
पुत्रोभूत्त्वादिनेदिने ॥ प्रियवाक्यश
रीवापिवहुर्क्तं ह्यप्रदर्शयेत् । स्त्रीय
द्रव्य समुद्राढ्य प्रीतिमुत्पाद्यचातु
लाम् ॥ भुक्त्वातुपोषणात्तेनतद्दादा
यपुनर्व्रजेत् । यथातेनप्रदत्तन्या-
सापहरणात्पुरा ॥ दु खमेवम-
हत्प्राप्त्वादारुणप्राणनाशनम्। ता
दृशतस्माद्द्यात् सपुत्रोभूत्त्वामहागु
णे . ॥ अल्पायुषस्तथाभूत्त्वा मरण
यान्तितेतथा । दु. खदत्त्वाप्रयान्त्ये
वप्रकृत्यैवंपुन पुन' । यदाहपुत्रपु
त्रेतिप्रलापहिकरोतिस' । तदाहा
स्य करोत्येष क ' सपुत्रोहिकस्यच
॥ अनेनापिकृतन्यासमदीयपरिचा
रिणा । द्रव्यापहारोपिपितापूर्वमद्ये
वतस्यच ॥ पिशाचत्त्व मयादत्तमद्ये
वहिदुरात्मन: । द्रव्यापहरणेनापि
ममप्राणागता किल ॥ दु खेनम
हताचैवयथार्तपीडित पुरा । तदा
दु खप्रदत्त्वाहद्रव्यमुद्राढ्यसुत्तमम्
॥ भोगीनसर्वमादायचिरात्विश्वास्य
सौम्यवत् । गतोस्मिस्वरहचाद्यक
स्याहसुतईदृश ॥ नचैषोपिपितापू
र्वमद्ये वनचकस्यचित् । पिशाचत्व
मयादत्तमद्ये वचदुरात्मन . ॥ एव
मुक्त्वाप्रयात्येवतप्रहस्यपुन पुन. ।
प्रयात्यनेनमार्गेणदु:खंदत्त्वासुदारु
णम् ॥ एवन्यासस्यसम्बन्धात्पुत्रा.

पुत्र

किन्तेभवन्तिवै । ससारेदु खबहु
लाहयन्ते यनतनहि ॥ १ ॥ ऋणस
म्बन्धिन ' पुत्रान् प्रवक्ष्याम्यितवाय
त । ऋणयस्यगृहीत्वाय प्रयाति
मरणंकिल ॥ अन्नदातासुतोभूत्वा
भ्रातावाथपिताप्रिय । मित्ररूपेण
वर्त्तेतत्र्यन्तर्दुष्ट सदैवस ॥ गुण
नैवप्रपश्येत सक्रूरोनिष्ठुराकृति
। जल्पतेनिष्ठुर वाक्य सदैवस्वजने
पुत्र ॥ नित्य मिष्ट समश्नातिभोगा
न्भुञ्जीतनित्यश । द्यूतकर्मरतो
नित्यंचौरकर्मणिनित्यश ॥ गृहा
द्द्रव्यबलाद्दत्तांवार्यमाण प्रकुप्य-
ति । पितरमातरचैवकुत्सतेचदिने
दिने ॥ द्रावकत्रासकश्चैवबहुनिष्ठु
रजल्पक ' । वञ्चयित्वैवमुद्राश्च ह
त्वासु'खेनतिष्ठति ॥ जातकर्मादि-
भिर्वालो द्रव्यंगृह्णातिदारुण ' ।
पुनर्विवाहसयोगान्नानाभेदैरनेकधा
॥ एवसचोयतेद्रव्य नैवमेनदददात्य
पि । गृहक्षेत्रादिकसर्वममैवहिनस
शय । पितरमातरचैव वदत्येवं
दिनेदिने ॥ सुदण्डैर्मुसलैश्चैवकचा
ग्रातैस्सुदारुणै । मृतेतुतस्मिन्पित
रितथामातरिनिष्ठुरम् ॥ नि ' स्ने
होनिर्घृणश्चैवजायतेनात्रसशय ।
श्राद्धकार्याणि दानानिनकरोतिक
दाचन । एवविधास्तथ.पुत्राभवन्ति
चमहीतले ॥ २ ॥ रिपुपुत्रप्रवक्ष्या

पुत्र .

मितवाग्रे मुनिपुङ्गव । बाल्ये वयसि सम्प्राप्ते रिपुवत्वर्ततेसदा ॥ पित रमातरचैवक्रीडमानोहिताडयेत् ताडयित्वाप्रयात्येवप्रहृष्टैवपुन पुन ॥ पुनरायातित तत्रपितर मातरपुन । सक्रोधोवर्ततेनित्य नैवकर्मणिसर्वदा ॥ पितरमारयि त्वातु मातरचपुन : पुन . । प्रया त्येवसदुष्टात्मा पूर्ववैरानुभावत ॥ २ ॥ अथात सप्रवक्ष्यामियस्मा ल्लभ्योभवेत्प्रिय । जातमात्र प्रिय कुर्यात्बाल्ये नटनक्रीडनै. ॥ वय. प्राप्यप्रियकुर्यान्मातापित्रोरनन्तर म् । भक्त्यासन्तोषयेन्नित्य तावुभौ परिपालयेत् ॥ स्नेहेनवचसाचैवप्रि यसम्भाषणेनच । मृतौगुरुसमाज्ञा यस्नेहेनरुदतेपुन ॥ श्राद्धकमाणि सर्वाणि पिण्डदानादिकाक्रियाम् । करोत्येवसुदु . खार्त्तस्तेभ्योयात्रा प्रयच्छति ॥ ऋणत्रयान्वित : स्नेहा न्निर्यापयतिनिश्चित । यस्माल्लभ्य भवेत्कान्तप्रयच्छतिनसंशय. ॥ पु त्रोभूत्वामहाप्राज्ञस्वनेनविधिनाकि ल ॥ ४ ॥ उदासीनप्रवक्ष्यामितवा ग्रे प्रियसाम्प्रतम् । उदासीनेनभावे नसदैवपरिवर्त्तते ॥ ददातिनैवरु ष्णातिनक्रुध्यतिनतुष्यति । नैवोप यातिसन्त्यज्यउदासीनोद्विजोत्तम ॥ तवाग्रे कथितसर्वं पुत्राणागतिरीदृ

पुत्र

शी । यथापुत्रास्तथाभार्या पितामा ताथबान्धवा ॥ भृत्याश्चान्ये समा ख्याता . पशवस्तुरगास्तथा । गजा महिष्योदासश्चऋणसम्बन्धिन स्व मी ॥ ०० ॥ सुपुत्रलक्षणातु । व- शिष्ठउवाच । पुत्रस्यलक्षणपुण्य तवाग्रे प्रवदाम्यहम् । पुण्यप्रसक्तो यस्यात्मासत्यधर्मरत सदा ॥ बु द्धिमान्ज्ञानसम्पन्नस्तपस्वीवाग्विदा म्वर . । सर्वकर्मसुसद्धीरोवेदाध्य यनतत्पर ॥ सर्वशास्त्रप्रवक्ताचदे वब्राह्मणपूजक . । याजक सर्व यज्ञाना दातात्यागी प्रियम्वद ॥ विष्णुध्यानपरोनित्य शान्तोदान्त सुहृत्सदा । पितृमातृपरोनित्य स र्वस्वजनवत्सल . ॥ कुलस्यतारको विद्वान् कुलस्यपरितोषक . । एव गुणै सुसयुक्त : सुपुत्र सुखदाय क ॥ पुत्रस्यजङ्गमतीर्थत्व यथा । सर्वतीर्थाद्वरतीर्थपुत्रतीर्थमुदाहृतम् ॥ यद्वै यो वैष्णवद्वै सर्वधर्मवहिष्कृ त । पृथुनापुत्रतीर्थेन पवित्रोऽगा त्परंपदम् ॥ सत्पुत्रंपरमतीर्थप्राप्य मुच्यन्तिपूर्वजा : । पितापितृऋणमु- क्त ' स्यात्जातेपुत्रे महात्मनि ॥ वैष्णवपुत्रस्यपूर्वपुरुषत्रातृत्व यथा [। वैष्णवोयदिपुत्र.स्यात्सतारयति पूर्वजान् । पितॄनधस्तनान्वशाख्ता रयत्यतिपावन ' ॥ + ॥ कुपुत्रजन

नेपितॄणानरकगमनयथा । तथाय-
द्विकुपुत्र स्यात्तेनमज्जन्तिपूर्वजा ।
। सुघोरेनरकेदोना ' श्रपन्तिचमुहु
र्मुहु ॥ यथा जलेकुप्लवेनतरन्म
ज्जतिमूढधी ' । तथापिताकुपुत्रे
णतमसान्धेनिमज्जति ॥ जातमा
त्रेकुलेजन्तौसशरीरेतेपितामहा ।
किमेषोऽधोनयेदस्मात्ऊर्द्ध्वंवावेणा
वोभवन् ॥ इतिपाद्मेभूमिखण्डे
११ । १२ । १८ । १२० अध्याय '
॥ सप्तविधा । पुत्रा यथा । वरजो
वीर्यजश्चैवक्षेत्रज ' पालकस्तथा ।
विद्यामन्त्रसुतानाञ्चगृहीत ' सप्तम
सुत ' ॥ इतिब्रह्मवैवर्ते ॥ इति
ब्रह्मवैवर्तेप्रकृतिखण्डे ५६ अध्या-
य पुत्रमुखदर्शने पुण्य यथा । श्री
पार्वत्युवाच । गृहमागत्यप्राणेश
तपसाफलदायकम् । कल्पेकल्पे
ऽध्यासतेय तपश्चागत्यमन्दिरम् ॥
शीघ्र पुत्रमुखपश्यपुण्यबीजमहोत्स
वम् । पुन्नामनरकत्राणकारणभव
तारणम् ॥ स्नानश्चसर्वतीर्थेषुसर्वय
ज्ञेषुदक्षिणा । पुत्रस्यदर्शनस्यास्यक
लानार्हन्तिषोडशीम्सर्वदानेनयत्पु
ण्य यत्पृथिव्या ' प्रदक्षिणे पुत्रद
र्शनपुण्यस्यकला नार्हन्तिषोडशीम्
सर्वाभिस्तपोभिर्यत्पुण्य यदेवानशने
व्रते । सत्पुत्रोद्भवपुण्यस्यकलाना
र्हन्तिषोडशीम् ॥ यद्विप्रभोजने पु
ण्ययदेवसुरसेवने ' । सत्पुत्रप्राप्ति
पुण्यस्यकलानार्हन्तिषोडशीम् ॥
इति ब्रह्मवैवर्ते गणपतिखण्डे ६
ऽध्याय: ॥ ०( +++ )० विद्यादि
रहितस्यपुत्रस्यनिन्दायथा । कोर्थ
पुत्रेणजातेनयोनविद्वान्नधार्मिक ।
तथागवाकिंक्रियते यानदोग्ध्रीनग-
र्भिणी ॥ सचमध्यमोत्तमाधमभेदा
त्त्रिविध ' यदुपात्त यश पित्रा
धनवीर्यमथापिवा । तन्नहापयतेय
स्तुसनरोमध्यम स्मृत ॥ तद्वीर्या
भ्यधिकयस्तुपुनरन्यत्स्वशक्तित ।
निष्पादयतितप्राज्ञावदन्तिनरमुत्त
मम् ॥ य पित्रासमुपात्तानिधनवी
र्ययशासिच ' न्यूनतानयतिप्राज्ञा
स्तमाहु पुरुषाधममितिमार्कण्ड
यपुराणम् ) ॥ *+* ॥ जायमानो
हरेद्दारान् वर्द्धमानोहरेद्धनम् ।
म्रियमाणोहरेत्प्राणान् नास्तिपुत्र
समोरिपुरितितुकुपुत्रजन्य दु ख
मनुभवन्कुर्वाणस्योक्ति ॥ असारेच'
सुखपूर्णंसत्पुत्रमुखदर्शनम् । कुपु-
त्राचरितादु खमरणाभ्यधिकवि-
दु ॥ ०( *+* )० पुत्रस्यप्रशसा
यथा । धनधान्यञ्चरत्न वाततसर्वंपु
त्रहेतुकम् । नभक्षितयत्पुत्रेणतद्
द्रव्यनिष्फलभुवि ॥ शतकूपाधिका
वापीशतवापीसमसर । सर ^श
ताधिकोयज्ञ पुत्रोयज्ञशताद्वर

॥ तपोदानोद्भवपुत्रं जन्मान्तरसुखप्रदम् । सुखप्रदोपिसत्पुत्र ' प्राणिभ्योऽपिसुनिश्चितम् ॥ पुत्रादपिपरोवन्धु र्नभूतोनभविष्यति ॥ + ॥ एष्टव्याबहव: पुत्रायद्येकोपिगयाव्रजेत् । यजेद्वाचाश्वमेधेन नीलंवा वृषमुत्सृजेत् ॥ पुन्नरकंतस्मात्त्रायते । चेङ्पालने । सुपीतिक ' ॥ यद्वा । पुनाति॰पूयतेवा । पूञ्पवने । पुत्रोद्वस्वर्श्चेतिक्त । ॥ उत्तमश्चिन्तितकुर्यात्प्रोक्तकारीचमध्यम. । अधमोऽश्रद्धयाकुर्यादकर्त्तोच्चरितपितुरितिमहाभारतम् ॥

पुत्रक' । पुं॰ पुत्रे ॥ शरभे ॥ धूर्त्ते॥ शैलविशेषे ॥ वृक्षप्रभेदे ॥ अनुकम्पित पुत्र । अनुकम्पायामिति क ॥ पुत्रकृत्रिमे॰इतियावादिषुपाठाद्वा कन् ॥

पुत्रकन्दा । स्त्री॰ लक्ष्मणाकन्दे ॥

पुत्रका । स्त्री॰ कन्यायाम् । पुत्र्येव । स्वार्थेकन् । सूतकापुत्रिकेतिङी नह्रस्वर्णस्यपक्षेऽकार . ॥

पुत्रजीव' । पु॰ वृक्षविशेषे । स्त्रीपदापद्टे । जीयापोताइतिभाषा ॥ पुत्रजीवोगुरुर्हृष्योगर्भदः श्लेष्मवातकृत् । सृष्टमूत्रमलोरूक्षोहिम. स्वादुकटु : पटु . ॥

पुत्रजीवक . । पु॰ पुत्रजीववृक्षे ॥

पुत्रदा । स्त्री॰ लक्ष्मणायाम् ॥ वध्याकर्कोटक्याम ॥ गर्भदाचीक्षुपे ॥

पुत्रदात्री । स्त्री॰ श्वेतपुष्पिकायाम् । व्रतपत्रायाम् । मालवदेशप्रसिद्ध लतेयम् ॥

पुत्रपत्नी । स्त्री॰ पुत्रस्यभार्यायाम् । स्नुषायाम् ॥ पुत्र : पतिर्यस्या . । नित्य सपत्न्यादिष्विति नान्तादेशेनान्तलक्षणोङीप् ॥

पुत्रपौत्रीण : । वि॰ पुत्रपौत्रानुभवकर्त्तरि ॥ पुत्रपौत्राननुभवति । परोवरेत्यादिनाख ' ॥

पुत्रप्रदा । स्त्री॰ वृहतीप्रभेदे । श्वविकायाम् ॥

पुत्रभद्रा । स्त्री वृहज्जीवन्त्याम् ॥

पुत्रवान् । पुं॰ विद्यमानपुत्रे ॥ पुत्रोऽस्त्यस्य । मतुप् ॥

पुत्रवती । स्त्री॰ विद्यमानपुत्रायाम् ॥ सर्वासामेकपत्नीनामेकाचेत्पुत्रिणीभवेत् । सर्वास्तास्तेनपुत्रेणप्राह पुत्रवतीर्मनु ॥ पुत्रोस्त्यस्या . । मतुप् ॥

पुत्रवल' । त्रि॰ पुत्रवति ॥ पुत्रोस्त्यस्य । अन्येभ्योपिदृश्यतइतिवलच् । असंज्ञात्वाद्वल इतिनदीर्घ ' ॥

पुत्रशृङ्गी । स्त्री॰ अजशृङ्ग्याम् ॥

पुत्रश्रेणी । स्त्री॰ प्रत्यक्श्रेण्याम् । मूषिकपर्ण्याम् ॥ पुत्राणाश्रेणिरस्या . ॥

पुत्रसू: । स्त्री॰ पुत्रजनयित्र्याम् ॥

पुत्राचार्य । पुं॰ पुत्रेणाध्यापितेपितरि ॥ मुख्येनपुत्राचार्यतत्वाऽसम्भवात् ॥

पुत्रान्नाद । पुं॰ पुत्रान्नभोजिनि । कुटीचके ॥

पुत्रिका । स्त्री॰ कन्यायाम् । दुहितरि । तनयायाम् ॥ यथा अपुत्रोनेन विधिनासुताकुर्वीतपुत्रिकाम् । यदपत्यभवेदस्यातन्ममस्यात्स्वधाकरम् ॥ पुत्तलिकायाम् ॥ पाञ्चालिकायाम् । यावतूलके ॥ पुत्रीव । इवेतिकन् । यावादित्वाद्वा । केचवृतिकस्य ॥

पुत्रिकाधर्म । पुं॰ भ्रातारहितकन्यादाने ॥ सचाभ्रातकायाकन्यायापुत्रार्थिनएवप्रसिद्ध । यथा । अभ्रातकाप्रदास्यामितुभ्यंकन्यामलङ्कृताम् ॥ अस्यायोजायतेपुत्र । समेपुत्रोभवेदिति ॥

पुत्रिकापुत्र । पुं॰ पुत्रिकायास्तनये ॥ सचौरससम ॥

पुत्रिकाप्रसू । स्त्री॰ कन्याजनन्याम् ॥

पुत्रिणी । स्त्री॰ पुत्रवत्याम् ॥

पुत्री । पुं॰ पुत्रवति ॥ ज्येष्ठेनजातमात्रेणपुत्रीभवतिमानवः ॥

पुत्री । स्त्री॰ सुतायाम् ॥ हलविशेषे ॥ शार्ङ्गरवादित्वान्ङीन् ॥ यथा । धिक्तस्यजीवितलोकेयस्यपुत्रीकृत्सिता । सर्वपापंखुदुःखायपुत्रीभवतिदेहिनामिति ॥

पुत्रीय । त्रि॰ पुत्र्ये ॥ पुत्रस्यनिमित्तसंयोगउत्पातोवापुत्राच्छ ॥

पुत्रेष्टि । स्त्री॰ } पुत्रनिमित्तक
पुत्रेष्टिका । स्त्री॰ } यागविशेषे ॥
यथा । षष्ठीत्वापञ्चवर्षीयपुत्रेष्टिप्रथमंचरेदितिस्मृति ॥

पुत्रैषणा । स्त्री॰ पुत्रार्थदारस्वीकारवाञ्छने ॥

पुत्र्य । त्रि॰ पुत्रीये ॥ पुत्रस्यनिमित्तसंयोगउत्पातोवा । पुत्राच्चेतियत् ॥

पुद्गल । पुं॰ आत्मनि ॥ देहे । कार्ये ॥ पूर्यतेगलतीतिपुद्गल । वृद्धिह्रासविशिष्टइत्यर्थं ॥ त्रि॰ । सुन्दराकारे । रूपादिमद्द्रव्ये ॥

पुद्गलका । पुं॰ वल्मीके ॥ पुद्गलार्थे ॥

पुद्गलास्तिकाय । पुं॰ षड्विधरूपादिमद्द्रव्ये ॥ पृथिव्यादिमहाभूतानिचत्वारितृणगुल्मलतादिरूपस्थावरम् जरायुजाण्डजस्वेदजोद्भिज्जभेदभिन्नजङ्गमञ्चेतिषड्प्रकारोयंपुद्गलास्तिकाय ॥

पुन । अ॰ अप्रथमे ॥ अधिकारे ॥ भेदे । विशेषे ॥ पक्षान्तरे ॥ अवधारणे ॥ पनते । पनस्तुतौ । बा॰ अर । अस्योकारश्च ॥

पुन पुन । अ० पौन ' पुन्ये । वा-रवारम् । मुहु ' । अभ्रत् । अभीक्ष्णम् । असकृदित्यस्यपर्याया ॥ नित्यवीप्सयोरितिपुन ' शब्दस्यद्विर्वचनम् ॥

पुन पुना । स्त्री० नदीविशेषे ॥ यथा कीकटेषु गयापुण्यापुण्यराजगृहेवनम् । च्यवनस्याश्रम पुण्योनदीपुण्यापुन पुनेतिगयामाहात्म्यम्॥

पुन.संस्कार । पुं० द्वितीयवारोपनयनादिसंस्कारे ॥

पुनरागमनम् । न० द्वितीयवारागमने । फिरआवनाइतिभाषा ॥ यथा । अधुनागम्यता विप्रपुनरागमनकुर्विति ॥

पुनरुक्तम् । न० शब्दार्थयो पुनर्वचने ॥ यथाहगौतम । शब्दार्थयो पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ ५ अध्याये ५७ ॥ पुनर्वचनपुनरुक्तम् तस्यविभागार्थंशब्दार्थयोरिति । तेनशब्दपुनरुक्तमर्थपुनरुक्तञ्च लभ्यते । अनुवादेऽतिव्याप्तिवारणायअन्यत्राऽनुवादादिति । अनुवादान्यत्वं सतीत्यर्थ । निष्प्रयोजनपुनरभिधानहिपुनरुक्तम् । अनुवादस्तु व्याख्याहप्र . सप्रयोजनकएवेतिभाव ' । तथाच समानार्थकपूर्वानुपूर्वीकशब्दप्रयोगः शब्दपुनरुक्तम् । समानार्थकभिन्नानुपूर्वीकशब्दस्यनिष्प्रयोजन पुनरभिधानमर्थपुनरुक्तम् । आद्य यथाघटोघट इति । द्वितीय यथा घट कलस इति । एतस्य प्रमादादिनासम्भव' ॥ ५७ ॥ पुनरुक्तभेदान्तरमाह । अर्थादापन्नस्यस्वशब्देनपुनरभिधानम् ॥ ५८ ॥ पुनरुक्तमित्यनुवर्तते । यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकी प्रतिपत्तिर्भवति तस्यतेनरूपेणपुनरभिधानपुनरुक्तम् । इदमेवचअर्थपुनरुक्तमितिगीयते । यथावह्निरूपाइतिपूर्वपदाक्षिप्तोक्तिरियम् । उष्णोवह्निरितिउत्तरपदाक्षिप्तोक्ति । एववह्निरस्तिगेहेनास्तीतिविध्याक्षिप्तोक्ति । जीवन्गेहेनास्तिवहिरस्तीतिनिषेधाक्षिप्तोक्ति : । पुनरुक्तं विध्यच्छेदभाष्यादिसम्मतम् । अन्ये तुशब्द पुनरुक्त द्विविधम्० तत्र वशब्दस्यपुनरभिधानपर्यायेणाभिधानम् ॥ अन्यत्पुनरर्थपुनरुक्त मित्याहु ॥ ५८ ॥ द्विगुणे ॥

पुनरुक्तजन्मा । पु० विप्रे । ब्राह्मणे ॥ पुनरुक्तजन्मास्य यथा मातुरग्रे अधिजननद्वितीयमौञ्जिबन्धने । तृतीयं यज्ञदीक्षायांद्विजस्यश्रुतिचोदनात् । इतिमनु ॥

पुनरुक्ति । स्त्री० पुन.कथने । कथितस्यैवकथने ॥

पुनर्डीनम् । न० सगडीनप्रवसासामान्य

गमने ॥
पुनर्भवः । पुं० नखे ॥ पुनरभीक्ष्णं नवः ॥
पुनर्नवा । स्त्री० साटीइतिप्रसिद्धे शाकविशेषे । शोथघ्न्याम् ॥ सा द्विधा । यथा । पुनर्नवाश्वेतमूला वृश्चीरोदीर्घपत्रकः । पुनर्नवापरारक्तावर्षाभूरक्तपुष्पकः ॥ पुनर्नवाश्वेतमूलाशोथघ्नीदर्विपत्रिका । कटुकषायारुच्युष्णा. पांडुघ्नीदीपनीपरा ॥ शोफानिलगरश्लेष्महरीब्रध्नोदरप्रणुत् । पुनर्नवापरारक्ता रक्तपुष्पाशिलाटिका । शोथघ्नीक्षुद्रवर्षाभू र्वर्षकेतु' कठिल्लकः ॥ पुनर्नवारुणा तिक्ताकटुपाकाहिमालघु । वातलाग्राहिणीश्लेष्म पित्तरक्तविनाशिनीतिभावमिश्रः ॥ पुनरभीक्ष्णं नवानूयतेवा । स्तुदोरप् । सुभ्रादि ॥
पुनर्नवाशाकम् । न० पौनर्नवे ॥ पौनर्नवशाकमतीवकोमलसुखं द्रितमुष्टिभिरेवपीडितम् । सम्पाचितमिष्टतमस्तुतैलेसवासितहिङ्गुकणेनतच्यम् ॥ पौनर्नवहिचतुष्यन्तितारुच्यं कफापहम् । शोफपांडुक्षयश्वासज्वरहृद्रोगनाशनम् ॥
पुनर्भवः । पुं० नखे ॥ पुनर्भवति । भू० अच् ॥ रक्तपुनर्नवायाम् । शरीरान्तरे ॥ त्रि० । पुनर्नवाजाते ॥
पुनर्भवी । पुं० आत्मनि ॥ कु० हेम चन्द्रः ॥
पुनर्भूः । स्त्री० दिधिष्वाम् । द्विरूढायाम् । अक्षतयोनित्वाद्विधवा पुनरुह्यते । इत्यसावन्यस्यभूत्वाऽन्यस्यपुनर्भवतिसंस्कृता । भू० क्विप् ॥ अक्षताचक्षताचैवपुनर्भूः संस्कृतापुनरिति स्मृतिः ॥ त्रिविधासासमाख्यातानारदेनमहर्षिणा । कन्यैवाक्षतयोनिर्यापाणिग्रहणदूषिता । पुनर्भूः प्रथमासोक्तापुनः संस्कारकर्मणा ॥ १ ॥ देशधर्मानवेक्ष्यस्त्रीपितृभिर्याप्रदीयते । उत्पन्नसाहसान्यस्मै सा द्वितीयाप्रकीर्तिता ॥ उत्पन्नसाहसाउत्पन्नव्यभिचारा ॥ २ ॥ असत्सुदेवरेषुस्त्री बान्धवैर्याप्रदीयते । सवर्णायसपिण्डायसातृतीया प्रकीर्तितेतिमिताक्षरा ॥ ३ ॥ त्रि० । पुनर्वारजाते ॥
पुनर्वचनम् । न० पुनरुक्ते ॥
पुनर्वसु । पु० ऋषौ । विष्णौ ॥ पुनः पुनः शरीरेषुवसतिक्षेत्रज्ञरूपेण । वस० । उः । पुनः शब्दः पौनः पुन्येवर्तते० एकस्यपुनः शब्दस्य लोपोवा ॥ कात्यायनमुनौ ॥ धनाध्यक्षे ॥ शिवे ॥ नक्षत्रविशेषेपुनर्वसू द्विवचनान्तः ॥ पुनर्वसौजाते ॥ अविष्ठाफाल्गुनीस्थयोलुक् ॥ तत्र जातस्यफलम् ॥ यथा । प्रभूतमिष्ट

कृतशास्त्रयत्न सद्व्रतकामी वरभूष
णाढ्य । दाताप्रतापीवसुधाधिपो
सौपुनर्वसौयस्यभवेत् प्रसूरितिच्य-
चैकवचनप्रामादिकम् ॥

पुनान । त्रि॰ पवित्रीकुर्वाणे ॥ पुना
ति । पूञ्॰शानच् । प्वादीनाह्रस्व ॥

पुन्नाग । पु॰ सितोत्पले ॥ जातीफले
॥ पाण्डुनागे ॥ स्वनामख्यातवृहत्
पुष्पवृक्षविशेषे । पुरुषे । तुङ्गे । केश
रे । श्वेतवर्णभे । गुर्जरदेशेसँदेशराइ
तिख्याते ॥ नरश्रेष्ठे ॥ यथा । सर
लाविरलायन्तो घनायन्त कलिद्रुमा
। नश्यमौनचपुन्नागोस्यस्मिन्ससार
कानने ॥ पुमान्नागइव । उपमितस
मास । पुन्नागोनरश्रेष्ठ प्राधान्यात्
मद्धव ॥

पुन्नाट । पु॰ चक्रमर्द्दे ॥

पुन्नाड । पु॰ चक्रमर्द्दे ॥ पुमासनाड
यति । नडभ्रंशे । चु॰ । कर्म्मण्यण्
। मस्यानुस्वारपरसवर्णौ ॥

पुन्नामनरक । पु॰ नरकविशेषे ॥ पुन्ना
मनरकघोरविनाशप्राहसर्वत ॥

पुपूषन् । त्रि॰ पवितुंसाधयितुंनिर्वृत्तं
कर्तुमिच्छतिकर्षके ॥ पुनाते सन्न
न्ताच्छट शत्रादेश । सनियहगु
होश्चे तिचकारादिट प्रतिषेध ॥

पुप्फुल । पु॰ उदरस्थवायौ ॥ इति
भूरिप्रयोग ॥

पुप्फुस । पु॰ बीजकोषे । पद्मबीजा
धारे । वराटके ॥ फीँपडा॰फेफडा
चइतिख्याते वामपार्श्वस्थमलाशये
। रक्तफेनजे ॥ यथा । हृदयाद्वामतो
ऽधश्चपुप्फुसोरक्तफेनज इति ॥

पुमर्थ । पु॰ धर्मादिषुचतुर्षु । पुरुषा
र्थे ॥ पुंसोज्ञातु पुरुषस्यार्थं प्रयो
जनयस्मिन् ॥

पुमान् । पु॰ परब्रह्मणि । पुरुषे । पूरुषे
। नरे ॥ पाति । पा॰ । पातेर्डुंमसु
न् ॥ क्वचित्पूञोडुमसुन्निति पाठ
। तत्रपुनाति । पूञ्पवने ॥ यथाव-
च्छदुलोत्मंधीय पुमान्सप्रकाशते
॥ आत्मनि ॥ देवतिर्यङ्मनुष्येषुपुन्ना
माभगवान्हरि । स्त्रीनाम्नीलक्ष्मी
मैत्रेयनानयोर्विद्यतेपरमितिविष्णु
पुराणम् ॥ यावन्नविन्दतेजायाताव
दर्द्धोभवेत्पुमान् । यन्नबाले परि
वृतश्मशानमिवतद्गृहम् ॥

पू । स्त्री॰ पुर्याम् । नगरे । पत्तने ।
हट्टादिविशिष्टे पुरे ॥ पिपर्त्ति । पृ॰
। भ्राजभासेतिक्विप् । उदोष्ठ्यत्यु त्
। रपर । र्वोरितिदीर्घं ॥ पूर्यते
। पुर॰ स॰क्विप् वा ॥

पुर । पुं॰ गुग्गुलौ ॥ पौतभिण्टाया
म् ॥ न॰ । गेहे ॥ पाटलिपुत्रे ॥ पु
ष्पाटौनाङ्गलाग्रत्तौ ॥ नागरमुस्ताया
म् ॥ चर्म्मणि ॥ गृहोपरिगृहे ॥ देहे
। शरीरे ॥ शरीरंहिपुरमिवपुरमृद्वा
रपालाधिष्ठात्राद्यनेकपुरोपकरणस

न्यत्तिदर्शनाच्छरीरमपिपुरम् । पुरञ्जसोपकरण - म गा ऽसहः स्वस्वाम्यर्थदृष्टर यदपुरसामान्यादनेकोपकरणसहित शरीरस्वात्मना ऽसहत राजस्थानीयस्वाम्यर्थं भवितुमर्हतीत्यनुध्येयम् ॥ राजनामचिह्नितराजधान्याम् ॥ पिपर्त्ति । पृ० । सू०क ' ॥ यद्वा । पुरति । पुरअग्रगमने । इगुपधेतिकः ॥ न० । स्त्री० हट्टादिविशिष्टस्थाने ॥ बहुग्रामीयव्यवहारस्थाने । नगरे । पत्तने । कटके । पट्टे । निगमे ॥ अस्यलक्षणमत्स्यपुराणेराजधर्मेद्रष्टव्यम् ॥

पुरःसरः । त्रि० अग्रगे । अग्रेसरे ॥ पुर ' सरति । सृ० । पुरोग्रतोग्रेषुसर्त्तेरितिट ॥

पुरञ्जन ' । पुं० जीवे । कर्म्मणापुरञ्जनयतीतिव्याख्यानात् ॥ पुरुषंपुरञ्जनविद्याद्व यद्व्यनक्त्यात्मन ' पुरम् । एकद्वित्रिचतुष्पाद्बहुपादमपादकमितिश्रीभागवतम् ॥

पुरञ्जनी । स्त्री० बुद्धौ ॥ यथा । नविदामवयसम्यक् कर्त्तारंपुरुषर्षभ । आत्मनश्चपरस्यापिगोत्रनामचयत् कृतम् ॥ राजनृमदीया . सर्वेतेमाच्छस्पुरञ्जनीमितिभागवतम् ॥

पुरञ्जय . । पु ० सूर्यवंशीयराजविशेषे । काकुत्स्थे ॥ त्रि० पुरजयकर्त्तरि॥

पुरटम् । न० सुवर्णे ॥

पुरण । पु ० समुद्रे ॥ पूर्यते । पृ० । कृपृवृजिमन्दिनिधाञ्भ्यः क्युः ॥

पुरतटी । स्त्री० हट्टग्रामे । हट्टीपुरतटीमतीतिहारावली ॥

पुरत . । अ० अग्रतोर्थे ॥ प्रथमे ॥ पुरति । पुर० । बाहुलकात्अतसुच् ॥

पुरद्वारम् । न० गोपुरे ॥ पुरस्यद्वारम् ॥

पुरद्विट् । पुं० शिवे ॥ पुरंद्वेष्टि । द्विष० ॥ क्विप् ॥

पुरन्दर ' । पु० इन्द्रे । पुरहूते । शक्रे ॥ अरीणापुरोदारयतीतिविग्रहे । पूःसर्वयोर्दारिसहोरितिविदारणार्थकाद्दृधातो खच्प्रत्ययेवाचयमपुरन्दरौचेतिनिपातित । चौरे । यथा । समासमीनायदिपाकशालासमासमीनाद्यधेनवःस्युपुरन्दरस्याविषयर्यदिस्यात्पुरन्दरस्यापिपुरनयाचे ॥ न० । चविके ॥

पुरन्दरा । स्त्री० गङ्गायाम् ॥ इतिहारावली ॥

पुरन्ध्रि . । स्त्री० पुरन्ध्राम् ॥

पुरन्ध्री । स्त्री० सपुत्रसधवायाम् । कटुम्बिन्याम् ॥ पुरगेहधारयति । धृञ्० । स्वार्थण्यन्त । सञ्ज्ञायाभृतृब्रितिखचिहस्व । गौ०ङीष् । पृ० ॥ सीमाचे ॥

पुरविजयी । पुं० पुराविजीतरिशिवे ॥

पुरश्चरणम् । न० मन्त्राणासाधनायजपहोमादिक्रियायाम् ॥ यथा । जपहोमौतर्पणञ्चाभिषेकोविप्रभोजनम् । पञ्चाङ्गोपासनलोकेपुरश्चरणमिष्यते ॥

पुरश्छद । पु० तृणविशेषे । दर्भे । सोमपत्रे । उलु० ब्रू० गौडभा० ॥

पुर । अ० अग्रे ॥ प्रथमे ॥ प्राच्यादिशि ॥ पूर्वकाले ॥ पूर्वस्मिन्पूर्वस्मात्०पूर्वीवाएवपूर्वस्याम् पूर्वस्याः पूर्वावाअसत्यागतोरमणीयवा । पूर्वाधरावराणामसि पुरधवश्चैषामितिअसि पुरआदेशश्च ॥

पुरस्कार . । पु० पुरस्क्रियायाम् ॥ अभिशापे ॥ अग्रकरणे ॥ पुर । क्रियतेऽनेन । कृञ्० । घञ् ॥

पुरस्कृत । त्रि० अभिशस्ते ॥ अरियुक्ते ॥ अग्रेकृते ॥ ॥ पूजिते ॥ स्वीकृते ॥ सिक्ते । अभिषिक्ते । पुरोऽकारि । डुकृञ्० । क्त . । पुरोऽव्ययमितिगतित्वम् । नमस्पुरसोरितिसत्वम् ॥

पुरस्कृत्य । अ० पुरत कृत्वेत्यर्थे ॥

पुरस्क्रिया । स्त्री० पुरस्कारे ॥

पुरस्तात् । अ० प्रथमे ॥ प्राच्याम् ॥ अग्रतोर्थे ॥ पुरार्थे ॥ अग्रभागे ॥ पूर्वस्मिन् पूर्वस्यावा पूर्वस्मात् पूर्वस्यावा । पूर्व ' पूर्वावा । दिक्शब्देभ्य . सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्तातिः असातिरित्यतिपूर्वस्यपुरादेश . ॥

पुरा । अ० पुराणे । निकटे ॥ प्रबन्धे ॥ अतीते ॥ भाविनि ॥ प्रतीपे ॥ पुरति । पुर० । बा० का ॥ अविरते ॥ चिरातीते ॥ भविष्यदासन्ने ॥ गच्छपुरादेवोवर्षिष्यति । समनन्तरवर्षिष्यतीत्यर्थः ॥

पुरा । स्त्री० पूर्वदिशि ॥ सुगन्धिद्रव्यविशेषे । दिव्यायाम् । गन्धाढ्यायाम् । गन्धकुट्याम् ॥

पुराकल्प । पु० अर्थवादान्तरे । ऐतिह्यसमाचरिततयाकीर्त्तने । पूर्वपुरुषैराचरितस्याभिधाने ॥ यथा । पुराकल्पेतुनारीणांमौञ्जीबन्धनमिष्यते । अध्यापनञ्चवेदाना साविचीवचनतथेतियम : ॥ युगान्तरे ॥ यथा । पुराकल्पएतदासीत्०संस्कारकालोत्तरब्राह्मणाव्याकरणस्माधीयते । तेभ्यस्तत्तत्स्थानकरणनादानुप्रदानज्ञेभ्योवैदिका शब्दाउपदिश्यन्तेतदद्यत्वे नतथा०वेदमधीत्यत्वरितावक्तारोभवन्तीतिमहाभाष्यम् ॥

पुराकृतम् । त्रि० प्रारब्धकर्मणि ॥ पूर्वकालकृतपुण्यादौ ॥

पुराण । पुं० पणे ॥ षोडशपणे ॥ आत्मनि । सर्वकारणे । अनाद्यात्मनि ॥ सचपुरापिनवएकरूपएवनत्वधुनानूतनाकाञ्चिदवस्थामनुभव

ति। योहिअवयवोपचयद्वारेणाभिनि र्वर्त्यतेसइदानींनवोयथाकुम्भादि। तद्विपरीतस्त्वात्मापुराणोनहिवर्द्धित ॥ न० सर्वपुराणसामान्येपञ्च लक्षणे। सर्गश्चप्रतिसर्गश्चवंशोमन्व न्तराणिच। वंशानुचरितञ्चेति पुराणपञ्चलक्षणम् ॥ *[**]*)॥ इतिपञ्चलक्षणलक्षितेषुमत्स्याद्यष्टाद शसु॥ यथा। मद्वयभद्वयञ्चैवब्रत्रय वचतुष्टयम्। अनापलिङ्गकूस्कानि पुराणानिपृथक्पृथगिति ॥ पुराभ वमित्यस्मिन्नर्थे सायञ्चिरम्प्राह्णेप्र गेऽव्ययेभ्यष्ट्युट्युलौ। तुट्चेति०ट्यु-ट्युलौ। पूर्वकालैकेतिनिपातितस्तु डभाव ॥ पुराणप्रोक्तेषुब्राह्मणकल्पे ष्वितिनिपातितोवा ॥ पु० न० का र्षापणे ॥ त्रि०। प्रत्ने। पुरातने। पुराणा० इ० भा० ॥

पुराणग । पु० प्रजापतौ। ब्रह्मणि ॥

पुराणपुरुष . । पुं० विष्णौ ॥ पुराण श्चासौपुरुषश्च ॥

पुराणी। स्त्री० चिरन्तन्याम् ॥ पुरा भवा। टित्त्वान्ङीप् ॥ वह्वादित्वा त्पक्षेङीष्वा ॥

पुरातन । पु० परमात्मनि ॥ काले नापरिच्छिन्नत्वात्पुरापिभवतीति सतथोच्यते ॥ त्रि०। चिरन्तने। पुराणे। प्रत्ने ॥ अनादिगुरुपरम्प रागते ॥ पुराभव । सायञ्चिरमि त्यट्युलौ। अव्ययकान्यपिनिपा तनानिभवन्तीतिपक्षेतुट् ॥

पुरातनी। स्त्री० चिरन्तन्याम् ॥ टि-त्त्वान्ङीप् ॥

पुराधिप . । पु० पुरपालके ॥

पुराध्यक्ष । त्रि० नगराधिकृते ॥

पुरारि . । पुं० त्रिपुरान्तके ॥ शिवे ॥

पुरार्द्धविस्तर । पुं० खेटे ॥ शाखा नगरे ॥

पुरावसु । पु० भीष्मे। पाण्डवाना पितामहे ॥

पुरावृत्तम्। न० इतिहासे। पूर्वच-रिते ॥ पूर्ववृत्तप्रतिपादकव्यासा दिप्रणीतग्रन्थे ॥ पुरावृत्तमाचष्टे। पुरावृत्तमाख्यानम् ॥ ण्यन्तात्पचा द्यच् ॥

पुराश्रुति । स्त्री० पुरातन्यागाथा याम् ॥ अन्तकालेऽहिभूतानिमुह्यन्ती तिपुराश्रुति ॥

पुरासिनी। स्त्री० सहदेवीलतायाम् ॥

पुरासुहृत्। पु० शिवे ॥ इ० हे० ॥

पुरि । पु० राजनि ॥ स्त्री० पुर्याम् ॥ नद्याम् ॥ पिपर्त्ति पूर्यतेवा। पॄ० । कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्चेति इः ॥

पुरी। स्त्री० नगर्याम् ॥ नृपावास . पुरीप्रोक्ताविशापुरमपीष्यते ॥ तीर्थ विशेषे ॥ अयोध्यामथुरामायाकाशी काञ्चीअवन्तिका। पुरीद्वारावतीचैव

सम्मेताश्मोक्षदायिका ॥ तासुवास
प्रकुर्वन्तियेहृत्तावानरा परम् ।
लभन्तेनपुनर्जन्म मातृगर्भेषुकुत्र
चित् ॥ पु० । दशनामात्मर्गतस
न्यासिनि ॥ यथा । ज्ञानतत्त्वेन
सम्पूर्णः पूर्णतत्त्वपदस्थितिः ।
परब्रह्मरतोनित्यं पुरीनामासउच्य
ते ॥ इतिवृहच्छङ्करदिग्विजय
॥ पुरति । पुर० । इगुपधेति
क । ओरगादित्वाज्जातेरितिवा
ङीप् ॥

पुरीतत् । पु० न० अन्त्रे । आन्त०
इतिभाषा ॥ हृदयपरिवेष्टननाड्या
म् ॥ पुरींशरीरंतनोति । तनु ०
। क्विप् । गमादीनामितिअनुना
सिकलोपे । तुक् ॥ पुरितनोतीति
प्रसे० नहिवृतीतिदीर्घ ॥

पुरीमोह । पु० धुस्तूरे ॥

पुरीषम् । न० विष्ठायाम् ॥ पिपर्त्ति
शरीरम् । पृ० । कृतृभ्यामीषन् ।
पृषृभ्याकित्त्वे ति० ईषन्किच्च ।
उदोष्ठ्यपूर्वस्य ॥ पद्धे ॥

पुरीषणः । पु० पुरीषे ॥ इतित्रि
काण्डशेष ॥

पुरीषमः । पु० माषे । मूर्खे ॥ इ०
त्रिकाण्डशेष ॥

पुरुः । पु० देवलोके । स्वर्लोके ॥
नृपवि० । ययाति कनिष्ठात्मजे ॥
परागे ॥ दैत्यवि० ॥ त्रि० प्राज्ये
। प्रचुरे ॥ पिपर्त्ति० पूर्यतेवा ।
पृ० । पृभिदीतिकु ॥

पुरुः । स्त्री० नदीविशेषे ॥

पुरुकुत्सः । पु० इन्द्रारिविशेषे ॥

पुरुदशकः । पु० सर काके । हंसे ॥

पुरुदमा । पुं० इन्द्रे । विडौजसि ॥

पुरुधा । अ० बहुप्रकारे ॥

पुरुरवा । पु० पुरूरवसि ॥ पुरुरौति
। रुशब्दे । पुरुशब्दोपपदेरौतेरसिप्र
त्यय । विद्यात् पुरुरव शब्दे रु
कारस्यापिदीर्घतामितिलिङ्गिरूपको
ष ॥

पुरुरूप । त्रि० बहुरूपे ॥ पुरूणि
प्रचुराणिरूपाणियस्य ॥

पुरुवर्पसम् । न० बहुरूपे ॥ इ० वेद
भाष्यम् ॥

पुरुशक्ति । त्रि० बहुशक्तिमति ॥

पुरुष । पु० पुन्नागपादपे ॥ तिलक
द्रुमे ॥ जीवनविशिष्टेकार्यकरण
सङ्घाते । पूरुषे ॥ नरे ॥ अधि
कृतवर्णाश्रमादि विशिष्टे शरीरा
धिष्ठातरि ॥ यथा । आपस्तुम्भो
दातिमानुष सम्यक्प्रतिपद्यते ।
कर्माण्यव्यक्तकार्याणि तमाहुः पुरुष
बुधाइति ॥ हिरण्यगर्भे । समष्टिलिङ्गा
त्मनि । व्यष्टिसर्वकरणानुग्राहके ॥ अ
न्तर्यामिरूपेणपूर्णरूपे । आत्मनि ।
पुरेषुपर्युवाशयाने । पूर्णत्वात्पुरि
पुरिवाशयानेपरमात्मनि ॥ पूरयति-

मनुजोत्तम ।पौरुषेणविनातेषाकि-
चिदिद्ध्यतिफलम् ॥ कर्म्म ताप्रा
प्यतेलोकेरोजसस्यतथाफलम् ॥ कृ-
च्छ्रात्कर्म्मणाविहितामसस्यतथाफ
लम् ॥ पौरुषेणाप्यतेराजन्मार्गित
व्य फलनरै । दैवमेवविजानन्ति-
नरा पौरुषवर्जिता ॥ तस्मा-
त्रिकालसंयुक्तदैवनसफलभवेत्।पौ
रुषदैवसम्पत्याकालेफलतिपार्थिव॥
दैवपुरुषकारश्चकालश्चमनुजोत्तम।
त्रयमेतन्मानुषस्य पिण्डितस्यात्-
फलावहम् । कृषेर्वृष्टिसमायोगा-
द्दृश्यन्तेफलसिद्धय । तास्तुकाले
प्रदृश्यन्तेनैवाकालेकथञ्चन॥ तस्मा
त्सदैवकर्त्तव्यसधर्म्म पौरुषनृभि ॥
एवतिप्राप्नुवन्तीहपरलोकफलध्रुव-
म् । नालसा प्राप्नुवन्त्यर्थान्नचदै
वपरायणा । तस्मात्सर्वप्रयत्नेन-
पौरुषेयसमाचरेत् ॥ त्यक्त्वालसान्
दैवपरान्मनुष्यानुत्थानयुक्तान्पुरु
षान्हिलक्ष्मी । अन्विष्ययत्नाद्वृणु
तेनृपेन्द्रतस्मात्सदोत्थानवताहिभा
व्यम् ॥ इतिमात्स्ये दैवपुरुषका-
रकोनाम १९५ अध्याय ॥ पुरुष
स्यकार कर्मप्रष्ठीतत्पुरुष ॥

पुरुषघ्न । त्रि० पुरुषपरिमाणे ॥
पुरुषद्वयसे ॥ प्रमाणेद्वयसज्दघ्नञ्
मात्रचश्चेतिपुरुषात्प्रमाणेर्थेदघ्नच्॥

पुरुषदघ्निका । स्त्री० मेदायाम् ॥

पुरुषनाथ । पु० राज्ञि ॥ सेनापतौ ॥
पुरुषान्नयति । णीञ्० । कर्मण्य-
ण् ॥

पुरुषपुण्डरीक । पु० नरश्रेष्ठे ।
पुरुषव्याघ्रे ॥ जिनराजविशेषे ॥

पुरुषर्षभ । पु० नरश्रेष्ठे । पुरुषकु
ञ्जरे ॥ स्युरुत्तरपदेव्याघ्रपुङ्गवर्षभ
कुञ्जरा । सिंहशार्दूलनागाद्या
पुंसिश्रेष्ठार्थवाचका ॥

पुरुषलक्षणम् । न० पुरुषस्वरूपे ।
तच्चरूपमयथापद्मपुराणे ९६ अ
ध्यायम् ॥

पुरुषसारहर । पु० ग्रहे ॥ पुरुषा
णांसारविवेकधैर्यक्षमाद्यान्निप्रमुख
हरतीतितथा ॥

पुरुषसिंह । पु० पुरुषश्रेष्ठे ॥ जि
नराजविशेषे । शौरी ॥

पुरुषाद । पु० राक्षसे ॥ निर्दये ॥

पुरुषाद्य । पु० आदिनाथनामजि
ने ॥ विष्णौ ॥

पुरुषायुषम् । न० वर्षशते ॥ पुरुष-
स्यायु । अचतुरेतिनिपातनात्सा
धु ॥

पुरुषार्थ । पु० पुरुषस्यप्रयोजने ।
चतुर्वर्गे ॥ धर्मार्थकाममोक्षास्तुपुरु
षार्थाउदाहृता ॥ यथामनु ।
वशेकृत्वेन्द्रियग्रामसंयम्यचमनस्त
था । सर्वान्संसाधयेदर्थानक्षिण्वन्
योगतस्तनुमिति ॥ पुरुषस्यार्थ ॥

पुरुषार्थत्वम् । न० पुरुषोद्देश्यप्रवृत्तफलसाधकत्वे ॥ भावेत्व. ॥

पुरुषार्थसाधनम् । न० चतुर्वर्गोपाये । तेचस्मृतिप्रसिद्धा । यथा अर्थस्य मूलंनिकृति क्षमाचकामस्यरूपञ्च वयोवपुश्च। धर्मस्ययागादिदयादम श्चमोक्षस्यसर्वोपरम क्रियाश्च ॥ तत्रउत्कृष्टपुरुषार्थलाभसक्षयत्वध मकामयमःमोमूर्ख एव ॥

पुरुषास्थिमाली । पु० शिवे ॥ पुरुषास्थ्नांमाला०सास्तिअस्य । व्रीह्यादित्वादिनि ॥

पुरुषोत्तम । पु० विष्णौ । भगवति । वासुदेवे ॥ पुरुषेभ्यः पुरुषेषुवा उत्तम । ननिर्धारणइतिषष्ठीसमासनिषेधात् । पुरुषाणामध्येउत्तमोवा । ननिर्धारणइति निषेधसूत्रात्स्यादनपेक्षया ऽसमर्थत्वान्नप्रवर्त्ततिकर्मधारयेतु सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैरित्युत्तमपुरुषइतिस्यात् ॥ यस्मात्क्षरमतीतो ऽहमक्षरादपिचोत्तम । अतोस्मिलोकेवेदेचप्रथित पुरुषोत्तम ॥ नृपवि० । क्षत्राहंविशेषे ॥

पुरुसत्तम । पु० श्रीहरौ ॥ पुरुर्विश्वरूपश्चासौसत्तमश्च ॥

पुरुस्पृह । त्रि० बहुभिस्पृहणीये ॥

पुरुह । त्रि० प्रचुरे ॥ पुरून्जहातिगच्छति । हन० । अन्येभ्योपीतिड.

॥ यद्वा ॥ पुरून्जहाति० जिहीतेवाआतइतिक ॥

पुरुहूत । पु० इन्द्रे ॥ पुरुप्रचुरहूतमाह्वानयज्ञेष्वस्य । पुरूणिहूतानि नामान्यस्य । युद्धे पुरुनाम्ना ऽसुरेणहूतइतिवा । ह्वेञ त । सम्प्रसारणम् । हलइतिदीर्घ ॥ पुरुभूयिष्ठ यथास्यात्तथायज्वभिर्हूयतइतिवा ॥

पुरुहूता । स्त्री० देवीविशेषे ॥ पुरुहूता पुष्कराक्षे० इतिभागवतोक्ते ॥

पुरूरवा । पुं० बुधस्यपुत्रे । उर्वशीरमणे । ऐले । बौधे । चन्द्रवंशीयादिराजे । राजर्षौ ॥ विश्वेदेवे ॥ पार्वणश्राद्धदेवे ॥ यथा । पुरूरवामाद्रवाश्चपार्वणेसमुदाहृतौ ॥ पुरुरौति । रुशब्दे । पुरूरवाइति० पुरुशब्दस्यदीर्घोरौतेरसिश्चनिपात्यसे

पुरोग । त्रि० अग्रगे । अग्रेसरे ॥ पुरोगच्छति । गम्लृ० । अन्येभ्योपीतिड ॥ प्रधाने ॥

पुरोगति । पु० कुक्कुरे ॥ त्रि० अग्रगे ॥

पुरोगम । त्रि० अग्रगे । पुरःसरे ॥ पुरोगच्छति । गम्लृ० । अच्० खच्वा ॥

पुरोगामी । त्रि० पुरोगे । अग्रेसरे । प्रष्ठे ॥ पुरोगन्तु शीलमस्य । सुप्यजातौणिनिस्ताच्छील्ये० इतिणिनि ॥

पुरोटि । पु० पत्रभङ्गकारे । रायभाटिद्व०गो०भा० ॥ पुरोटिःपुरस्कार्थैरितिहारावली ॥

पुरोडाश । पु० हविर्भेदे । यवचूर्णनिर्मितरोटिकाविशेषे ॥ पिष्टकसंचमसाम् ॥ हुतशेषे ॥ सोमरसे ॥ पुरोदाश्यते । दाश्रृदाने । कर्मणिघञ् । पौरोडाशपुरोडाशेत्यत्र निपातनाद्दस्यडत्वम् ॥

पुरोडाश्यम् । त्रि० पुरोडाशीये । हविर्योग्ये ॥

पुरोद्भवा । स्त्री० महामेदायाम् ॥

पुरोधा । पु० पुरोहिते ॥ पुरोऽग्रेधीयते । डुधाञ् । पुरसिचेति० धाञोऽसि ॥

पुरोभागा । त्रि० दोषैकदृशि । दोषमात्रदर्शिनि ॥ पुरः पूर्वं भजते । भज० । विनुण् ॥ दोषैकदृक्पुरोभागीतुकथ्यते ॥ अग्रगामिनि ॥

पुरोहित । पु० शान्त्यादिकर्त्तरि । परोधसि ॥ पुरोदृष्टादृष्टफलेषुकर्मसु०धीयते आरोप्यते य । डुधाञ्० । क्त । दधातेर्हिः ॥ वध्यास्त्वदण्डनीयास्त्व कथमस्यात् पुरोहित । अथर्वविहित कुर्यान्नित्य शान्तिकपौष्टिकम् ॥ लक्षणान्तर चयथा । वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः । आशीर्वादवचोयुक्तएषराज पुरोहित इति ॥ वर्जनीयस्तुयथा । कामव्यक्तमपुण्यवाऽनभिज्ञमजितेन्द्रियम् । नक्लत्याधितवापिनृप कुर्यात्पुरोहितमिति ॥

पुर्य्यष्टम् । न० पुर्य्यष्टके ॥

पुर्य्यष्टकम् । न० ज्ञानेन्द्रियाद्यष्टके ॥ यथा । ज्ञानेन्द्रियाणिपञ्चैवपञ्चकर्मेन्द्रियाणिच । मनोबुद्धिरहङ्कारश्चित्तञ्चेतिचतुष्टयम् ॥ प्राणोपानस्तथाव्यानउदानाख्यस्तथैनच । समानश्चेतिपञ्चैता कीर्त्तिता प्राणवृत्तय ॥ खवाय्वग्न्यम्बुरित्यभूतसूक्ष्माणिपञ्चच । अविद्याकामकर्माणिलिङ्गपुर्य्यष्टकविदुरिति । अन्यच्च । भूतेन्द्रिययमनोबुद्धि वासना कर्मवायव । अविद्याचाष्टकप्रोक्त पुर्यष्टमृषिसत्तमै ॥ अपिच । ज्ञानेन्द्रियाणिखलुपञ्च तथापराणि कर्मेन्द्रियाणि मनआदिचतुष्टयञ्च । प्राणादिपञ्चकमथो वियदादिपञ्चकामश्चकर्मचतम पुनरष्टधापू ॥ पुरीणामष्टकम् ॥

पुल । पु० पुलके । त्रि० विपुले ॥

पुलक । पु० कृमिभेदे ॥ प्रस्तरविशेषे ॥ तत्सपर्गोयाव्यचद्रष्टव्या ॥ मणिदोषे ॥ रोमाञ्चे । त्वक्पुष्पे ॥ हरितालि ॥ गजान्नपिण्डे ॥ गन्धर्वे ॥ गन्धर्वे०इतिहेमचन्द्रे पाठ ॥ असुराध्याम्वृतिहेमचन्द्र . । न० पर्वतो

थमृत्तिकादिवि० । कदुष्टे ॥

पुलकितः । त्रि० हर्षिते ॥ पुलकः सञ्जातोऽस्य । ता० इतच् ॥

पुलकी । पु० धाराकदम्बे ॥

पुलस्त्रि । पु० देशविशेषे ॥ शिलह्रदात्पूर्वभागे कामरूपात्तथोत्तरे । पुलस्त्रिर्देशोदेवेशि नरनारायण पर ॥

पुलस्ति । पु० पुलस्त्यमुनौ ॥

पुलस्त्य । पु० ब्रह्मणः कर्णाभ्यांजाते सप्तर्षीणामध्ये ऋषिविशेषे । इविर्भुव पत्यौ ॥

पुलह । पु० ब्रह्मणोनाभितोजाते सप्तर्षीणांमध्ये ऋषिविशेषे । गतिस्वामिनि ॥ स्वायम्भुवमनोस्तनये ॥

पुलहाश्रम । पुं० हरिक्षेत्रे ॥

पुला । स्त्री० प्लुताद्यनेकापरनामनि हयगतिवि० ॥ तदुक्तहयलीलावत्याम् । प्लुताख्यवल्गिता माधुर्याधारा पुलनाभिधा । पुनरेनानजोपान्त्या पुलामित्याहुदेशिकाः ॥ तत्रलक्षणमुक्तं चैव । त्रियतिसमविशेषानुत्क्षिपन्व्यग्रपादान्प्रसरतिपुरतोश्व सा प्रधारापुलाख्या । विलसतिसमपादोत्क्षेपणाकुञ्चनाजा करणमिहगतिका प्राहुरन्ये पुलाख्यामिति ॥ पार्ष्णिप्रधानं प्रविधायरागाहस्तास्त्रयीकल्यचरेत्पुलाख्यामित्यादि ॥

पुलाक । पु० तुच्छधान्ये । असारधान्ये ॥ सङ्क्षेपे ॥ भक्तसिक्थके ॥ पोलनम् । पुल० । भ० क्विप् । पुलमकति । अक० । कर्मण्यण् ॥ पोलतिवा । बलाकादयश्चेतिसाधु ॥

पुलाकी । पु० वृक्षे ॥

पुलायितम् । न० अश्वगतौ । विक्रान्तौ ॥ पुलाख्यया अयितगति । पुलायितम् । अय० । क्त

पुलिनम् । न० तोयोत्थिततटे । जलाद्विरोत्थिततटे । चडा० टाप० ङ० भा० ॥ पोलति पुलमहत्त्वे । पुलितलिभ्याञ्चेतिनन् ॥ द्वीपे ॥

पुलिन्द । पु० अरण्यचरेम्लेच्छजात्यन्तरे । शबरे ॥ पोलति । पुल० । कुलिपुल्योः किन्दच् ॥

पुलोमजा । स्त्री० इन्द्राण्याम् । पुलोम्नोमुनेर्जाता । पञ्चम्यामजातावितिड ॥

पुलोमद्विट् । पुं० इन्द्रे ॥

पुलोमा पु० दानवान्तरे ॥ मुनिविशेषे॥

पुलोमारि । पु० शचीपतौ ॥

पुल्कस । पु० पुक्कसे ॥ पृ० ॥

पुषा । स्त्री० लाङ्गलिकौवृक्षे ॥

पुषित । त्रि० पुष्टे । कृतपोषणेपक्षिरत्नगादौ ॥ पुष्यतिस्म । पुष० । क्त । औपादिकत्त्वादिट् ॥

पुष्कर । पुं० रोगवि० ॥ नागवि० ॥ सारसपक्षिवि ॥ नृपवि० । नल

राजभ्रातरि ॥ वरुणपुत्रे ॥ यथा-
न्तरे ॥ मेघाधिपवि० ॥ पुष्करो
दुष्करजल ॥ द्वीपवि० ॥ न० खे
अम्बुनि ॥ पद्मे । सिताम्भोजे ।
तूर्यवक्त्रे ॥ खड्गफले ॥ हस्तिहस्ताग्रे
॥ काण्डे ॥ कुष्ठौषधे ॥ द्वीपवि० ॥
तीर्थविशे० ॥ यथा । गायत्र्याश्चपर-
स्थानश्रीमत्पुष्करमीरितमिति ॥
तत्ब्रह्मण स्थानम् ॥ पुष्यति ।
पुष्णातिवा पुष्यते० अनेनवा ।
पुष० । पुष किदितिकरन्कि-
त्वञ्च ॥

पुष्करक । पु० चिताभूमेराच्छाद-
नार्थं क्रियमाणेवृष्टकानिर्मितेदेव-
कुलाकारेगृहे ॥

पुष्करकर्णिका । स्त्री० स्थलपद्मिन्या-
म् ।

पुष्करज । पु० पुष्करमूले ॥ त्रि० ।
पुष्करोत्पन्ने ॥

पुष्करणी स्त्री० पुष्कर द्वीपनद्याम्॥

पुष्करद्वीप । पु० सप्तद्वीपान्तर्गतद्वी
पविशेषे ॥ नदीपुष्करणीनामद्वीपम
पुष्करमण्डिता । तयामपुष्करद्वी
प ' स्यापिल मुरभिवित ॥

पुष्करनाडी । स्त्री० स्थलपद्मिन्याम् ॥

पुष्करमूलम् । न० कुष्ठद्रव्यमूले । पौ
ष्करे ॥ पुष्करस्यकुष्ठौषधस्यमूलम् ॥

पुष्करवान् । पु० हस्तिनि ॥ पुष्कर
मस्त्यस्य । मतुप् ॥

पुष्करशिफा । स्त्री० पुष्करमूले ॥

पुष्कराख्य ' । पु० विष्णौ ॥ पुष्करे-
गोप मितेत्यक्षिणीयस्य । बहुव्रीहौ
सक्थ्यक्ष्णो , स्वाङ्गात्षजितिषच् ।,
पुष्करहृदयपुण्डरीकमक्ष्णोतिव्या-
प्नोत्यन्तर्यामिरूपेणेतिपुष्करोपपदा
दशूव्याप्ताविति धातो कर्म ण्यण् ॥
पुरुहूतादेव्या . स्थाने ॥

पुष्करावर्त्त । पु० मेघभेदे ॥

पुष्कराक्ष । पु० सारसपक्षिणि ॥

पुष्कराह्वय । पु सारसे ॥ न० पु-
ष्करमूले ॥

पुष्करिणी । स्त्री० भूम्याम् । हस्ति-
न्याम् ॥ सरोजिन्याम् । कमलिन्या-
म् । कृत्रिमजलाशये॥ पुष्करमूले
॥ स्थलपद्मिन्याम् ॥ समचतुरस्रखा
ते । यथा । चतुर्विंशाङ्गुलोहस्तोध-
नुस्तच्चतुरुत्तर ।शतधन्वन्तरञ्चैव
तावत्पुष्करिणीमता। एतत्पञ्चगु
ण प्रोक्तस्तडागइतिनिश्चय. ॥ तेन
चतुर्दिक्षुविंशतिहस्तान्यूनतायाच
तु शतहस्तान्यूनाभ्यन्तरत्वेनपु
ष्करिणी । एतज्जलाशयाधारपरन
तु० उपरितटम् । शतेनधनुर्भि पु
ष्करिणी । इतिनव्यवर्द्धमानधृतोव
शिष्ठ ॥ पुष्कराणिसन्त्यस्याम् । पु-
ष्करादिभ्योदेशे० इतीनि ॥

पुष्करी । पु० हस्तिनि ॥ मत्वर्थीय
इनि ॥

पुष्करेक्षण । पु० प्रभासतीर्थाधिष्ठात्र्यादेव्याम् ॥

पुष्कल । पु० भरतात्मजे । पुष्करे लावण्याब्धौ ॥ न० । ग्रासचतुष्टयात्मकभिक्षायाम् ॥ यथा । भिक्षा माहुर्ग्राससमात्रमन्नं तस्माच्चतुर्गुणम् । पुष्कलं हन्तकारन्तुतच्चतुर्गुणमुच्यते ॥ इति ॥ अष्टकुञ्चिपरिमितेधान्यमानभेदे ॥ यथा । अष्टमुष्टिर्भवेत्कुञ्चि कुञ्चयोष्टौचपुष्कलम् । पुष्कलानिचचत्वारिंशाटक परिकीर्त्तित ॥ त्रि० परिपूर्णे ॥ श्रेष्ठे ॥ पुष्यति । पुष० । पुष कित्दित्यनुवृत्तौ० कलस्तिकलन्कित् ॥ स्त्रियागौरादित्वात्पुष्कली ॥ सि० लज्वा ॥

पुष्कलक । पु० गन्धमृगे ॥ क्षपणे ॥ कीलके ॥

पुष्कस । पु० पुक्कसे ॥ पृ० ॥

पुष्ट । त्रि० पालिते । कृतपोषणे । पुषितः ॥ पुष्यतेस्म । पुष० । क्त. । दैवादिकत्वान्नेट् ॥

पुष्टि । स्त्री० पोषणे ॥ वृद्धौ । अवयवोपचये ॥ अश्वगन्धायाम् ॥ मातृकाविशेषे ॥ यथा । पुष्टिर्गणपतेः पत्नीपूजिताजगतीतले । ययाविना परिक्षीणाः पुमांसोयोषितोपिचेतिभागवतम् ॥ पोषणम् । पुष० । क्तिन् ॥ व्रतफले० । पुंष्टिर्धनजना दीनांवृद्धिरित्यभिधीयते ॥

पुष्टिकर । त्रि० पुष्टिजनके ॥

पुष्टिका । स्त्री० जलशुक्तौ ॥

पुष्टिकान्त । पु० श्रीगणेशे । विनायके ॥

पुष्टिदा । स्त्री० अश्वगन्धायाम् ॥ वृद्धौ ॥ पुष्टिदात्र्याम् ॥

पुष्पम् । न० सुमनसि । प्रसूने । कुसुमे ॥ आमकूलातुयैकेचित्पुष्पं चिन्वन्तिवैद्विजाः । देवतास्तन्नगृह्णन्ति भस्मीभवतिदारुवदिति लघुहारीत ॥ विकाशे ॥ स्त्रीरजसि ॥ धनदविमाने ॥ नेत्ररुग्भेदे । फूला फूली० इ० भा० प्र० ॥ अस्यौषध यथा । हरीतकीवचाकुष्ठ पिप्पली मरिचानिच । विभीतकस्यमज्जाच शङ्खनाभिर्मन शिला ॥ सर्वमेतत् समंकृत्वाच्छागीक्षीरेणपेषयेत् । नाशयेत्तिमिरंकण्डूपटलान्यर्बुदानि च ॥ अधिकानिचमांसानियश्चरात्रौ नपश्यति । अपिद्विवार्षिकंपुष्प मासेनैकेनसाधयेत् ॥ वर्त्तिश्चन्द्रोदयानामनृणांदृष्टिप्रसादनी ॥ इतिच क्रपाणिदत्त ॥ पुष्यतिपुष्पतेवा । पुष्पविकसने । पचाद्यच्० घञ्वा ॥

पुष्पकम् । न० रीतिपुष्पे ॥ पुष्पवदाभरणभूतेधनदस्यविमाने ॥ पुष्पकोस्त्रीतिशब्दार्णवात्पुल्लिङ्गोपि । नेत्ररोगविशेषे । पुष्पे ॥ रत्नकङ्कणे ॥

रसाञ्जने ॥ लोहकासे ॥ मृद्भार शकल्याम् ॥ कासीसे ॥ पुष्पति । पुष्प० । क्वन् ॥ पुष्पमिववा । इवेप्र तिकृताविति कन् ॥

पुष्पकरण्डकम् । न० उज्जयिन्याम्शि वस्योद्याने ॥

पुष्पकरण्डिनी । स्त्री० अवन्त्याम् । उज्जयिन्याम् ॥

पुष्पकाशीशम् । न० किञ्चित्पीतेका सीसे । कमके । नेत्रौषधे ॥

पुष्पकीट । पु० भ्रमरे । रोलम्बे ॥ कुसुमकृमिमात्रे ॥

पुष्पकेतन । पुं० कामदेवे ॥

पुष्पकेतु । पु० रीतिपुष्पे । कुसुमा ञ्जने ॥ पुष्पस्यकेतुरिवनाशकत्वात्

पुष्पघातक । पु० वेणुकवृक्षे ॥ दम नवृक्षे ॥

पुष्पज । पु० पुष्परसे । पुष्पद्रवे ॥

पुष्पद । पु० वृक्षे ॥ त्रि० । पुष्पदा तरि ॥

पुष्पदन्त । पु० वायुकोणस्थदिग्गजे ॥ विद्याधरविशेषे ॥ सुविध्याख्य- जिने ॥ पुष्पमिवदन्ता यस्यस ॥

पुष्पदन्तक । पु० गन्धर्वविशेषे ॥

पुष्पद्रव । पु० पुष्पस्वेदे । पुष्पसारे ॥

पुष्पधनु । पु० कामदेवे ॥ पुष्प धनु रस्य । वासञ्ज्ञायामित्यनङ्भावेसा न्त ॥

पुष्पधन्वा । पुं० मदने । कामे ॥ पुष्प धनुरस्य । वासञ्ज्ञायामित्यनङ् ॥

पुष्पनिह । पुं० भ्रमरे ॥

पुष्पनिर्यासक । पु० पुष्पद्रवे ॥

पुष्पन्धय । पु० भ्रमरे ॥ पुष्पाणिध यति । धेट्० । मुञ्जकुलास्यपुष्पेषु धेट खशितिकेचिदितिखश् । अ रुर्द्विषदितिमुम् ॥

पुष्पपथ । पु० भगे । योनौ ॥

पुष्पपात्रम् । न० पुष्पाधारे ॥

पुष्पपुरम् । न० पाटलिपुत्रनगरे ॥

पुष्पफल । पु० कपित्थे ॥ कूष्माण्डे ॥ पुष्पयुक्तफलमस्य ॥

पुष्पबलि । पु० वास्तुपूजायाम् ॥

पुष्पमास । पुं० वसन्ते ॥ पुष्पाणा मास ॥

पुष्पयोग । पु० याचायोगान्तरे ॥ यथा । भौमेस्वराशिगेलग्ने सौम्ये केन्द्रत्रिकोणगे । पुष्पयोगोरिविपि नकुठार सञ्ज्ञकः ॥

पुष्परक्त । पु० सूर्यमणिवृक्षे ॥

पुष्परथ । पु० चक्रयाने । युद्ध विना यात्रोत्सवादौ सुखभ्रमणार्थरथे ॥ सुकुमारत्वात्० पुष्पमिवरथ ॥

पुष्परस । पु० मकरन्दे ॥ पुष्पस्य रस ॥

पुष्परसाह्वयम् । न० मधुनि ॥

पुष्पराग । पु० पीतमणौ । वाचस्प तिवल्लभे । पोखराज० इ० भा० ॥ अस्यलक्षणयथा । सुच्छायपीत

गुरुगात्रसुरङ्गशुद्ध स्निग्धस्वनिर्मल मतीवसुवृत्तशीतम्। य पुष्पराग सकलकलयेदमुष्य पुष्पातिकीर्त्ति मतिशौर्यसुखायुरर्थान् ॥ तस्यापल क्षणम्यथा । कृष्णबिन्दुबद्धिन रूक्ष धवलमलिनलघु । विच्छायशर्करा गारपुष्परागसदोषक ॥ अस्यपरी क्षालक्षणं यथा । घृष्टोविकाशयेत् पुष्परागमधिकमात्मीयम्। नखलु पुष्परागोजात्यतयापरीक्षकैरक्त ॥

पुष्परेणु । पु० परागे ॥

पुष्परोचन । पुं नागकेशरे ॥

पुष्पलाव । पुष्पलावी । पु० } मालाकारे ॥

पुष्पलिट् । पु भ्रमरे ॥ पुष्प लेढि । लिह० । क्विप् ॥

पुष्पवटी । स्त्री० फुलौरी० इ० प्र० खाद्यप्रभेदे ॥

पुष्पवन्तौ । पुं० एकयोक्त्यानिरुक्तिव वचनात्सूर्यचन्द्रसूर्ययो ॥ चन्द्रा र्कौ० एकयोक्त्यासाधारणवचने० पुष्पवन्तौ० प्रशस्तकपुष्पवानितिन प्रयोक्तव्यमितिभाव । पुष्पविकास ने । भाविमत्र् । पुष्प . प्रकाशस्त वन्तौ ॥

पुष्पवती । स्त्री० रजस्वलायाम् ॥ तीर्थविशेषे ॥ पुष्प रजोऽस्त्यस्या । मतुप् ॥ त्रि० पुष्पविशिष्टे ॥

पुष्पवाटिका । स्त्री० पुष्पवाट्याम् ।

पुष्पवाटी । स्त्री० पुष्पोद्याने । फुल वारी० फुलवरिया० इ० भा० ॥ पुष्पाणावाटी ॥

पुष्पवाण । पु० मन्मथे । कामदेवे ॥ पुष्पाणिवाणाअस्य ॥

पुष्पवाहन । पु० पुष्पराजाभिधे नृपे ॥

पुष्पशकटी । स्त्री० आकाशवाण्याम् । दैवप्रश्ने ॥

पुष्पशून्य । पु० उदुम्बरे ॥ त्रि० कुसुमरहिते ॥

पुष्पसमय । पुं० वसन्ते । चैत्रवैशा खयो । ॥ पुष्पाणासमय ॥

पुष्पसायक । पु० पुष्पधन्वनि । कामदेवे ॥

पुष्पसार । पुष्पद्रवे ॥ पुष्पस्यसा र ॥

पुष्पसिता । स्त्री० फूलसक्कर० इ० भा० प्र० द्रव्ये ॥ भवेत्पुष्पसिता शीतारक्तपित्ताहरीलघु ॥

पुष्पसौरभा । स्त्री० कलिकारीवृक्षे ॥

पुष्पस्वेद । पु० पुष्पद्रवे ॥

पुष्पहास । कुसुमविकासे ॥ पुष्पा णामुकुलात्मनास्थितानाहासोविका श पुष्पहास ॥

पुष्पहासा । स्त्री० रजस्वलायाम् ॥

पुष्पहीना । स्त्री० उदुम्बरे ॥ निष्फला याम् । रज शून्यायाम् ॥

पुष्पा । स्त्री० । कर्णपुर्याम् । मालि

ण्याम् । भागलपुर० द्र० प्र० नगरे ॥

पुष्पाजीवः । पुं मालाकारे ॥

पुष्पाञ्जनम् । न० अञ्जनवि० । कौसुम्भे । पुष्पकेतौ ॥

पुष्पाञ्जलि । पुं० प्रसूनानामञ्जलौ । कुसुमाञ्जलौ ॥

पुष्पाण्डक । पुं० शालिजातिविशेषे ॥

पुष्पाम्बुज । पुं० पुष्पद्रवे ।

पुष्पावचायी । पुं० मालाकारे ॥

पुष्पासवम् । न० मधुनि ॥ पुं० पुष्पमकरन्दकृतआसवे ॥

पुष्पास्त्र । पुं० कन्दर्पे । मकरध्वजे ॥

पुष्पाह्ला । स्त्री० शतपुष्पायाम् ॥

पुष्पिका । स्त्री० दन्तमले ॥ लिङ्गमले ॥

पुष्पित । त्रि० जातपुष्पे वृक्षादौ । प्रफुल्ले ॥ पुष्पवति ॥ पुष्पाणिसञ्जातान्यस्य । ता० इतच् ॥ रमणीये ॥ आपातरमणीये ॥

पुष्पिता । स्त्री० रजस्वलायाम् ॥

पुष्पिताक्ष । त्रि० बुद्बुदहष्टौ ॥

पुष्पिताग्रा । स्त्री० वर्णवृत्तेष्वर्द्धसमवृत्तप्रभेदे ॥ लक्षणयथा । अयुजिनयुगरेफतोयकारोयुजितुनजौजरगाश्च पुष्पिताग्रा ॥ य० । करकिसलयशोभयाविभान्तीकुचफलभारविनम्रदेहयष्टिः । स्मितरुचिरविलासपुष्पिताग्राव्रजयुवतिर्व्रततिर्हरेर्मुदेऽभूत् ॥

पुष्पेषु । पुं० कामदेवे ॥ पुष्पाणिइषवोऽस्य ॥

पुष्य । पुं० अष्टमनक्षत्रे । सिध्ये । तिष्ये ॥ पुष्य सर्वार्थसाधक ॥ तत्रजातस्यफलयथा । प्रसन्नगात्रः पितृमातृभक्तः स्वधर्मयुक्तोऽभिनयाभियुक्तः । भवेन्मनुष्यः खलुपुष्यजन्मासन्मानचामीकरवाहनाढ्य ॥ पौषमासि ॥ कलियुगे ॥ यथा ॥ सत्सम्प्रदायप्रथनायपुष्येशिष्यैश्चतुर्भिः सहयोवतीर्णः । उक्तोबृहत्सङ्गमतन्त्रराजे श्रीशङ्कराचार्यगुरुं तमीडे ॥ पुष्यातिकार्याणि०पुष्यन्त्यर्थाअस्मिन्निति वा । पुष्यसिध्यौनक्षत्रइतिकर्त्तर्यधिकरणेचक्यप् निपातित ॥

पुष्यध । पुं० भूर्जकण्टके । सङ्करजातिविशेषे । आवन्त्ये ॥

पुष्यरथ । पुं० युद्धविनासुखभ्रमणारथे । चक्रयाने ॥ असौपुष्यरथश्चक्रयानेनसमरायवत् ॥ पुष्यइवरथ । पुष्येयात्रोत्सवादौरथोवा ॥

पुष्यस्नानम् । न० पुष्याभिषेके ॥ यथा । मूलमनुजाधिपति प्रजातरोस्तदुपघातसंस्कारात् । अशुभशुभश्चलौकेभवतियतोतोनृपतिचिन्ता ॥ पुष्यस्नाननृपतेः कर्तव्य दैवविपत्रोर्धेष्याम् । नात परपविभ्रसर्वोत्पातान्तकरमस्ति ॥ अस्यविधि

कालिकापुराणेवाराह्यास्त्वद्रष्टव्य ॥
पुष्या । स्त्री॰ पुष्यनक्षत्रे ॥
पुस्तम् । न॰ पुस्तके । लिखितग्रन्थे ॥
यथा । विधायपूजयेन्नित्य पुस्तपूजो
क्तसिद्धये॥ लेप्यादिशिल्पकर्माणि॥
आदिनाकाष्ठपुत्तलिकादयोबोध्या
॥ यथा । मृद्वावादारुणावायवस्त्रे णा
प्यथचर्मणा । लोहरत्नै कृतवापिपु
स्तमित्यभिधीयते ॥ पुस्यते । पुस्त
आदरादौणिच् । एरच् ॥
पुस्तकम् । न॰ पुस्ते । लिखितग्रन्थे ।
पोथी इ॰ भा॰ ॥ तस्यपरिमाणं
यथा । मानवक्ष्ये पुस्तकस्यशृणुदे-
विसमासत । मानेनापिफलवि-
न्द्यादमानेश्रीर्हताभवेत् ॥ हस्तमा
त्रमुष्टिमात्रमावाहुद्वादशाङ्गुल।दशा
ङ्गुलतथाष्टौचततोहीननकारयेत् ॥
पुस्तकलेखकस्यपूजाफलयथा। आर
म्भेचसमाप्तौच लेखकप्रतिपूजयेत्
हरिद्रागन्धपुष्पाद्यै र्वस्त्रै श्चसुनतोरु-
रै ॥ यावदक्षरसङ्ख्यानप्रतिपत्रे
चसुन्दरि । तावद्युगसहस्राणित्र-
ह्मलोकेवसेच्चिरम् ॥ वेतनग्रहणेले
खकस्यदोषोयथा । वेतनयस्तुगृह्
णीयात्लिखित्वापुस्तकंसतु । याव
दक्षरसङ्ख्यानतावन्नरकेवसेदिति
योगिनीतन्त्रे तृतीय ३ भागे ७
पटल ॥
पुस्तकर्म्मा । पु॰ लेप्यादिशिल्पकर्म
कर्त्तरि ॥
पुस्तकशिम्बिका । स्त्री॰ शिम्बिप्रभेदे
॥ पुस्तशिम्ब्याम् ॥
पुस्तशिम्बि । स्त्री॰ पुस्तकशिम्बि-
कायाम् ॥
पूग । पु॰ क्रमुके । गुवाके ॥ तन्त्रे
। नानाजातीयानामनियतवृत्तीना
मर्थकामप्रधानानासङ्घे ॥ ब्रह्मदारु
णि ॥ न॰ गुवाकफले । उद्वेगे ॥
यथा । पूगगुरुहिमं रूक्षकषायकफ
पित्तहृत् । मोहनन्दीपनरुच्यमास्य
वैरस्यनाशनम् ॥ आर्द्रं तद्गुर्वभिष्य
न्दिवह्निदृष्टिहरस्मृतम् । स्विन्न दो
षत्रयच्छेदिदृढमध्य तदुत्तमम् ॥
अस्यपाकोयथा । शृङ्गाटकजीरकै
इ जातीकोषत्वचशजम् । लवङ्ग-
धान्यकञ्चापिप्रत्येकंकर्षयुग्मकम् ॥
हैयगवीनकुडवसिताचार्द्धतुलोज्ज्व
ला । धात्रीवरीद्व्यञ्जलिस्यपूगस्या
ष्टपलानिच ॥ उलूखलेचसंकुट्यचू
र्णं क्षीराढकान्वितम् । सन्याच्यभ-
क्षितहन्यात्वासरादौयथोचितम् ।
ज्वरदाहञ्चपित्तञ्चयक्ष्मशूलगुदाङ्कु
रान् ॥ छर्दिप्रमेहमूत्राणामाघातञ्च
विनाशयेत् । वलप्रदङ्गर्भदञ्चस्त्रीणा
ञ्चै तद्रसायनमिति ॥ पुनाति॰
पवतेवा॰ पूयतेमुखमनेनवा-। पू
ञ्॰ । छापूखडिभ्य । किदिति
गन् ॥

पूगकृत । त्रि० पुञ्जीकृते ॥ अपूग पूग सम्पद्यमान कृत: इत्यर्थ श्रेण्यादय ' कृतादिभिरितिसमासे ० श्रेण्यादिषुच्व्यर्थवचनमिति च्व्यर्थता ॥

पूगतिथ । त्रि० पूगानापूरणे ॥ बहुपूगेतिडटितियुगागमविधानादसस्यात्वे पिडट ॥

पूगपात्रम् । न० पूगपीठे । फरुवके ॥

पूगपीठम् । न० कटकोले । पतद्ग्रहे ॥

पूगपुष्पिका । स्त्री० कुड्मली । विवाहसम्बन्धिपुष्पताम्बूले ॥

पूगफलम् । न० उद्वेगे । चिक्कण्याम् ॥

पूगयाजक । पुं० बहुयाजके ॥

पूगरोट । पु हिन्तालवृक्षे ॥

पूगिका । स्त्री० क्रमुके ॥

पूगिकाफलम् । न० पूगीफले ॥

पूगी । स्त्री० पूगे । पूगवृक्षे ॥

पूगीफलम् । न० उद्वेगे । पूगफले ॥

पूजक । त्रि० पूजाकर्त्तरि ॥

पूजनम् । न० अर्चने । पूजायाम् । । यथा ॥ शास्त्रप्रणामशुश्रूषादौ ॥ पूजपूजायाम् । ल्युट् ॥

पूजनीय । त्रि० श्रुताचाराभिजनादिभि पूजायोग्ये ॥ पूज्ये ॥ पूजेरनीयर् ॥

पूजा । स्त्री० नमस्यायाम् । अपचितौ ॥ सपर्यायाम् ॥ पादप्रक्षालनार्चनधनदानादिरूपायामर्चायाम् ॥ देवार्चनायाम् ॥ तस्या सामान्यानुष्ठानयथा । आदावृष्यादिकन्यास करशुद्धिस्तत परम् । अङ्गुलिव्यापकन्यासौहृदादिन्यासएवच ॥ तालत्रयञ्चदिग्बन्ध प्राणायाम स्तत परम् । ध्यानपूजाजपश्चैव सर्वतन्त्रेष्वयविधिरितियामलवचनम् ॥ पूजनम् । पूज० । चितिपूजीत्यङ् ॥

पूजार्ह । त्रि० मान्ये । अर्घभाजि ॥ कुसुमादिभिरर्चनयोग्ये । पूज्ये ॥ पूजामर्हति । अर्हपूजायाम् । अर्हंद्रत्यच् ॥ स्त्रियापूजार्हा ॥

पूजित । त्रि० सत्कृते । अर्चिते ॥ पूज्यतेस्म ॥ पूज० । क्त ॥ देवे ॥ पूजितोय सुरासुरैरित्यादौभूतेक्तोनतुवर्त्तमाने० तेन तृतीयातत्रोपपद्यते । अन्यथाक्तस्यचवर्त्तमानइतिषष्ठीस्यात् ॥

पूजितव्य । त्रि० पूजनीये ॥

पूजिल । पुं० देवतायाम् ॥ त्रि० पूज्ये ॥

पूज्य । पु० श्वशुरे ॥ त्रि० वन्द्ये पूजार्हे । प्रतीक्ष्ये ॥ पूजार्हा य

था । गुरूणामपिसर्वेषां पूज्याः पञ्चविशेषतः । तेषामाद्यास्त्रयः श्रेष्ठास्तेषामातासुपूजिता ॥ यो भावयतियासूतेयेनविद्योपदिश्यते ज्येष्ठः भ्राताचभर्ताचपञ्चैतेगुरवस्मृताद्रूतिकौर्मेउपरिभागे ११ अध्यायः ॥ पूज्यते । पूज० । ।अचोयत् ॥ पूजयितुमर्हः । पूज० । अर्हेकृत्यतृचश्चेतियत् ॥ सर्वस्यैवहिदानस्यग्रहीतागुरुरुच्यते । कन्यायाश्चैव विद्यायाः प्रदातापूज्यतेगुरुः ॥

पूज्यपादः । पुं० भगवच्छङ्कराचार्ये ॥

पूत । पुं० शङ्खे ॥ श्वेतकुशे ॥ विकङ्कतवृक्षे ॥ न० बहुलीकृते । अपनीतबुषधान्ये ॥ सत्यवचने ॥ त्रि० व्रतादिनाशुद्धे । पवित्रे । प्रयते ॥ दधिगोमयादौसामन्यपवित्रे० स्वभावपवित्रेवा । पवित्रेमेध्ये ॥ दृष्टिपूतन्यसेत्पादमस्त्रपूतजलंपिबेत् । सत्यपूतांवदेद्वाचमनः पूतंसमाचरेत् । शठिते बहुलीकृते ॥ पूयतेस्म । पूङ० पूञ० वा । क्तः ॥ पवतेस्मवा । पूङोगत्यर्थेतिक्तः ॥

पूतक्रतायी । स्त्री० इन्द्राण्याम् । शच्याम् ॥ पूतक्रतोः स्त्री० । पूतक्रतोरैचेत्यैकारादेशोङीप्च ॥

पूतक्रतुः । पुं० इन्द्रे ॥ पूता क्रतवो येन ॥

पूतक्रतुः । स्त्री० देव्याम् ॥ पूताः क्रतवोयया सा ॥

पूतगन्धः । पुं० वर्बरे ॥

पूततृणम् । न० श्वेतकुशे ॥ कुशे ॥ पूतस्वतन्तृणञ्च ॥

पूतद्रुः । पुं० पलाशवृक्षे ॥

पूतधान्यम् । न० तिले ॥ पूतश्चतद्धान्यञ्च ॥

पूतना । स्त्री० हरीतक्याम् ॥ पूतनास्त्रिमतीसूक्ष्मेतिनिरूपणात् ॥ सिन्धुदेशजाखल्पत्वक्कृहद्स्थिहरीतकी लेपनेप्रशस्तेतिराजवल्लभः ॥ गन्धमांस्याम् ॥ बालरोगविशेषे ॥ बालमातृकाविशेषे ॥ दानवीविशेषे । बकासुरभगिन्याम् ॥ अहोबकीयस्तनकालकूटंजिघांसयापाययदप्यसाध्वी । लेभेगतिंधात्र्युचितांततोन्यं कंवादयालुंशरणंव्रजेम ॥ पूतंकरोति । तत्करोतीतिणिच् । बहुलमन्यत्रापीतियुच् ॥

पूतनारिः । पुं० बालमुकुन्दे । श्रीकृष्णे ॥ पूतनायाअरिः ॥

पूतनासूदनः । पुं० श्रीकृष्णे ॥ पूतनासूदितवान्० सूदयतिवा । सूदक्षरणे । नन्द्यादित्वाल्ल्युः ॥

पूतनाघ्नः । पुं० श्रीकृष्णे ॥ पूतनांहन्ति । हन० । क्विप् ॥

पूतपाप । त्रि० निरस्तस्वर्गभोगप्रतिबन्धकपापे ॥

पूतफल : । पु० पनसे ॥

पूता । स्त्री० दूर्वायाम् ॥

पूतात्मा । पुं० ईश्वरे ॥ पूत । शुद्ध. सत्त्वादिगुणसम्बन्धरहित आत्मा स्वरूपयस्य ॥ पूतश्चासावात्माचेति वा ॥ शुद्धदेहे ॥ शुद्धान्तःकरणे ॥ पूतश्चात्मायस्य ॥

पूति । स्त्री० दुर्गन्धे ॥ पवित्रतायाम् ॥ खट्टाशमुष्के ॥ न० रोहिषतृणे ॥

पूतिक : । पुं० पूतिकरञ्जे ॥ पुनाति । पूञ् । तिन्तिडीकादयश्चेति० इकन् ॥ न० विष्ठायाम् ॥

पूतिकरज : । पुं० लट्वाकरञ्जवृक्षे । कलिकारके । कलहनाशने । काटवतिकरञ्जे । काँटाकरञ्जइति० भा० ॥ पूतिश्चासौकरजश्च ॥

पूतिकरञ्ज । पुं० पूतिकरजे ॥

पूतिकर्णक । पुं० कर्णरोगविशेषे ॥ तल्लक्षणंयथा । कर्णविद्रधिपाकाद्वा जायतेचाम्बुपूरणात् । पूयस्रवतिवापूतिसज्ञेय: पूतिकर्णक: ॥ अस्यौषधंयथा । निर्गुण्डीसुरसास्तैलसिन्धुधूमरजोगुड : पूरणात्पूतिकर्णस्यशमनोमधुसंयुत ॥ अथवा । वरुणार्द्रकपित्थाम्रजम्बूपल्लवसाधितम् । पूतिकर्णापहंतैलंजातीपत्ररसेनवेति चक्रपाणिदत्त ॥

पूतिका । स्त्री० मार्जार्याम् ॥ पोड्इ० प्र० लताशाके । उपोदक्याम् ॥

पूतिकामुख । शम्बूके ॥

पूतिकाष्ठम् । न० सरलद्रुमे ॥ देवदारुमहीरुहे ॥ पूतिचतत्काष्ठञ्च ॥ पूते । पावनस्यकाष्ठं वा ॥

पूतिकाष्ठकम् । न० पूतिकाष्ठे ॥

पूतिगन्ध । पुं० गन्धके ॥ हिङ्गुदीवृक्षे ॥ न० रङ्गे ॥ त्रि० दुर्गन्धे ॥

पूतिगन्धि }<br>पूतिगन्धिक } त्रि० दुर्गन्धे

पूतिगन्धिका । स्त्री० वाकुच्याम् ॥

पूतितैला । स्त्री० ज्योतिष्मत्याम् ॥

पूतिदारु । न० देवदारुणि ॥

पूतिनस्य : । पु० नासारोगभेदे ॥ तल्लक्षणंयथा । दोषैर्विदग्धैर्गलतालुमूलेसम्मूर्छितोयस्यसमीरणस्तु । निरेतिपूतिर्मुखनासिकाभ्यांतपूतिनस्यप्रवदन्तिरोगम् ॥ औषधन्तु । । व्याघ्रीदन्तीवचाशिग्रुसुरसव्योषसम्भवै । पाचितंलावणतैलंपूतिनासागदंजयेत् ॥ अथवा । त्रिकटुविडङ्गकसैन्धवबृहतीफलशिग्रुसुरसदन्तीभि । तैलङ्गोजलसिद्धंनस्यंस्यात्पूतिनस्यस्य ॥

पूतिपत्र : । पुं० श्योनाकविशेषे ॥

पूतिपुष्पिका । स्त्री० मातुलुङ्गायाम् ॥

पूतिफली । स्त्री० वाकुच्याम् । सोम

राज्याम् ॥ पूतिफलेष्वस्या पाक कर्णेतिङीष् ॥
पूतिमयूरिका । स्त्री० अजगधायाम् ॥
पूतिमेद । पु० अरिमेदे ॥
पूतिवात । पुं० बिल्ववृक्षे ॥ अधोवायौ ॥
पूतिवृक्ष । पुं० श्योनाके ॥
पूतिशारिजा । स्त्री० खट्टाश्याम् ॥
पूतिक । पुं० गन्धमार्जारे ॥ घोडा करञ्ज इ० भा०प्र० करञ्जविशेषे ॥ लताविशेषे ॥
पूतिकरञ्ज । पु० लट्टा स्त्रकरञ्जे ।
पूतिगण्ड । पु० पूतिकीटे ॥
पूतिभाव । पुं० दौर्गन्ध्ये ॥ क्लेदे ॥
पूत्यण्ड । पु० गन्धकीटे ॥ गन्धैणे ॥ यस्यनाभौमृगनाभिर्जायते ॥
पूप । पुं० अपूपे । पिष्टके । पूआ० इ०भा० ॥ यथा ॥ समितागुडतोयेनमेलयित्वासुमर्दिताम् । घृतेविस्तार्यसुपचेत्सुवृत्तोमृदुपूपक ॥ अपूप, पुष्टिदोवल्योहृद्योगुरुतर स्मृत । पित्तानिलहरोवृष्य सुपक्वोरुचिकारक ॥ पवनपूः । पूञ्०स०क्विप् । पुवपाति०पिवतिवा । पारक्षणे०पानेवा । आतइतिक ॥
पूपला । स्त्री० पोलिकायाम् ॥
पूपाली । स्त्री० पोल्याम् ॥
पूपाष्टका । स्त्री० आग्रहायणीपूर्णिमाया परत कृष्णाष्टम्याम् ॥
पूपिका । स्त्री० पूलिकायाम्॥
पूयम् । न० पक्वव्रणादिसम्भवघनीभूतशुक्लवर्णविकृतरक्ते । क्षतजे । मलजे । पीप०राध०इ०भाषा ॥
पूयनम् । न० रक्तविकारे । पूये ॥
पूयरक्त । पु० नासारोगभेदे ॥ तल्लक्षणम्, दोषैर्विदग्धैरथवापिजन्तोर्ललाटदेशेऽभिहतस्यतैस्तै । नासास्रवेत्पूयमसृग्विमिश्र तत्पूयरक्त प्रवदन्तिरोगम् ॥
पूयारि । पुं० निम्बपादपे ।
पूयालस । पु० सन्धिगतरोगभेदे ॥ लक्षणयथा । पक्व शोफ सन्धिज सस्रवेद्य सान्द्र पूयपूतिपूयालस स । इतिसुश्रुत ॥
पूयोद । पु० नरकान्तरे ॥
पूर । पु० जलसमूहे । अम्भसावृद्धौ ॥ व्रणसंशुद्धौ ॥ खाद्यविशेषे ॥ न०दाहागुरुणि ॥
पूरक । पुं० प्राणवायौ, शनैर्वामनासापुटेन०दक्षिणनसापुटेनवा सव्यापसव्यन्यायेनान्त प्रवेशने ॥ वाह्येनवायुनामुक्तं शक्तिसीमप्रपूरणम् । पूरक सततभ्यासात्सुगुर्वपिविकर्षयेत्॥ नासिकोत्कृष्टउच्छ्वासोध्मात पूरकउच्यते ॥ आत्मानुसन्धाने ॥ ब्रह्मैवास्मी तियावृत्ति पूरकोवायुरीरित ॥ पूरीआपप्याय

णे । खलु ॥ वीजपूरे ॥ गुणकाद्भे ॥ पुं॰ प्रेतदेहनिष्पादकाशौचकादेय द्रव्यपिण्डे । त्रि॰ पूरणकर्त्तरि ॥

पूरण । पुं॰ सेतौ ॥ विष्णुतैले ॥ न॰ अङ्कानांगुणने ॥ वृष्टौ ॥ कुटन्नटे ॥ वानतन्तुषु ॥ पिष्टप्रभेदे ॥ हिङ्गुधान्यजलेमासमुखिन्न सूक्ष्मकुट्टितम् । सयुक्तहिङ्गुजीराद्र वीजपूरैलसैन्धवै ॥ घृतेतप्तेपरिभृष्ट-धूपितमासपूरणम् ॥ मासस्यपूरणरुच्य हृद्य पुष्टिकरपर । वातपित्तहरवल्य मन्दाग्निकफनाशनम् ॥ त्रि॰पूरके । पूरणकर्त्तरि ॥ पालनकर्त्तरि ॥ पृणाति । पृपालनपूरणयो । ल्युट् ॥ पूर्य्यतेऽनेन । पूरी॰ । करणेल्युट् ॥

पूरणी । स्त्री॰ शाल्मलिद्रुमे ॥ पटारम्भकसूत्रेषु ॥ पूरणकार्य्याम् ॥ पूरयति । पूरी॰ । ल्युट् । ङीप् ॥

पूराम्लम् । न॰ वृक्षाम्ले ॥

पूरिका । स्त्री॰ पूपविभेदे । पूरी॰ कचौरी॰इ॰भा॰ ॥ यथा । माषाणांपिष्टिकांयुञ्ज्याल्लवणाद्र कहिङ्गुभि । तयापिष्टिकयापूर्णासमिताकृतपोलिका ॥ ततस्तैलेविपक्वासापूरिकाकथिताबुधै । रुच्यासाहीगुरु स्निग्धावातपित्तासृदूषिका । चक्षुस्तेजोहरीचोष्णापाकेवातविनाशिनी । तथैवघृतपक्वाऽपिचक्षुष्या रक्तपित्तहृत् ॥ वदरचूर्णपूरिकातु । घृतमिश्रकणिक्कायामेलितपञ्चमांशकम् । वदरत्वग्भवंचूर्णंजलेना लोड्यपीडयेत् ॥ पूरिकाघृतसंपक्वा खण्डपाकविलेहिता । पूरिकावद्रोश्मिश्रास्निग्धापित्तहराहिमा ॥ मधुराबृंहवातघ्नी सराच्छर्दिविनाशिनी । एवंविप्रायखर्जूरशर्कराना रिकेरकै. ॥ द्राक्षयावैसुपूर्यैस्तुपूरिका पूर्ववत्पचेत् ॥

पूरित । त्रि॰ कृतपूरणे । पूर्णे ॥ पूर्य्यतेस्म । पूरी॰ । क्त । वादान्तेति पक्षेइट् ॥ गुणिते ॥

पूरुष । पुं॰ पुरुषे । नरे ॥ पुंसि ॥ चेतने ॥ यथा । यस्माद्विश्वमुदेति यत्ररमतेयस्मिन्पुनर्लीयतेभासाय स्यजगद्विभातिसहजानन्दोज्ज्वलं यन्महः । शान्त शाश्वतमक्रिययम पुनर्भावायभूतेश्वरम् द्वैतध्वान्तम पास्ययान्तिकृतिन. प्रस्तौमितपूरुषमिति ॥ पुरति । पुरअग्रगमने । पुर कुशन् । अन्येषामपीतिदीर्घं । पृषोदरादिर्वा ॥ यद्वा । पूरयति पूर्य्यतेवा । पूरी॰वा॰ कुशन् ॥

पूर्ण । त्रि॰ व्याप्ते ॥ पूरिते ॥ पु॰ शक्ते ॥ समर्थे । सकले ॥ पूर्य्यतेस्म पूरी॰ । कर्त्तरिकर्मणिवाक्त । वादान्तेतिसाधुः ॥

पूर्णक । पुं॰ स्वर्णचूडपक्षिणि ॥ कुत्सित पूर्णः । सञ्ज्ञायांकन् ॥

पूर्णकुम्भ : । पुं॰ भद्रकुम्भे । जलपूरितघटे ॥ पूर्णश्चासौकुम्भश्च ॥

पूर्णकोष्ठा । स्त्री॰ नागरमुस्तायाम् ॥

पूर्णचन्द्र । पुं॰ सम्पूर्णेन्दुभयाष्टम्योर्मध्यस्थेन्दौ ॥ पूर्णश्चासौचन्द्रश्च ॥

पूर्णता । स्त्री॰ पर्याप्तौ ॥

पूर्णपात्रम् । न॰ वस्तुपूर्णपात्रे ॥ वर्द्धपत्रे । पूर्णानके ॥ उत्सवकालेहर्षात्गृहीतवस्त्रालङ्कारादौ ॥ होमकर्मणिब्रह्मदक्षिणायाम् ॥ हर्षादुत्सवकालेयदलङ्काराम्बरादिकम् । चाकृष्यरहयतेपूर्णपात्रंपूर्णानकञ्चतत् ॥

पूर्णमा । स्त्री॰ पौर्णमास्याम् ॥

पूर्णमास । पुं॰ पौर्णमासयागे ॥

पूर्णमासी । स्त्री॰ पूर्णिमायाम् ॥

पूर्णबीज । पुं॰ बीजपूरे ॥

पूर्णवैनाशिक । पुं॰ वैनाशिके ॥ वैशेषिकास्तावदर्द्धवैनाशिका: सर्वक्षवादिनस्तुपूर्णवैनाशिकत्वेनप्रसिद्धा शास्त्रे ॥

पूर्णा । स्त्री॰ पञ्चमीदशमीपूर्णिमामावास्यासु ॥

पूर्णानकम् । न॰ वर्द्धापने ॥ आनके ॥ पटहे ॥ पात्रे ॥ पूर्णपात्रे । हर्षात्उत्सवकालेवस्त्राद्याकर्षणे ॥

पूर्णावतार : । पुं॰ नृसिंहे ॥ रामे ॥ परिपूर्णतमे श्रीकृष्णे ॥

पूर्णाहन्ता । स्त्री॰ परान्तायाम् । यथाहुर्वार्तिककारा । भुक्तयथान्नं कुक्षिस्थस्तात्मत्त्वंनैवपश्यति । पूर्णाहन्ताकवलितविश्वंयोगीश्वरस्तथेति

पूर्णिका । स्त्री॰ नासाच्छिन्नीनामकपक्षिणि ॥

पूर्णिमा । स्त्री॰ पौर्णमास्याम् । शुक्लपक्षान्तिमतिथौ ॥ साद्विविधा । यथा । राकाचानुमतीचैवद्विविधा पूर्णिमामता । पूर्णोदितकलाक्षीणे पौर्णमास्यानिशाकरे ॥ पूर्णिमानुमतीज्ञेयापश्चास्तमितभास्करे ॥ यस्मात्तामनुमन्यन्तेदेवतापितृभिःसह । तस्मादनुमतीनामपूर्णिमाप्रथमास्मृता ॥ यदाचास्तमितेसूर्येपूर्णचन्द्रस्यचोद्गम : । युगपत्सोत्तराराकात्तदानुमतिपूर्णिमा ॥ राकान्तामनुमन्यन्तेदेवतापितृभि सह । रञ्जनाच्चैवचन्द्रस्यराकेतिकवयोऽब्रुवन् ॥ तस्याजातस्यफलयथा । कन्दर्पतुल्योयुवतिप्रियश्चन्यायात्तवित्तः सततसहर्ष: । शूरोवलीशास्त्रविशारदश्चस्यात्पूर्णिमाजन्मनियस्यजन्तो : ॥ पूरी॰ । भावेक्त : । पूर्णचन्द्रस्यपूरणम्॰ तेननिर्वृत्ता ॥

पूर्त्तम् । न॰ खातादिकर्मणि ॥ आदिनादेवकुल्यादियह : । तडागम् । पुष्करिण्य : सभावापीदेवतायतनानिच । आरामश्चविशेषेण

पूर्त कर्मविनिर्दिशेत् ॥ अपिच ।
वापीकूपतडागानि देवतायतनानि
च ॥ अन्नप्रदानमारामं पूर्तमित्य
भिधीयते ॥ इति ॥ गृह्योपरागेय
द्दानपूर्त तदपिनाकदम् ॥ आरा
मादिक्रियाजफले ॥ पालने ॥ त्रि०
पूरिते ॥ छन्ने ॥ म० स्थम्० पूर्यतेस्म
वा । पृ० । भावेकर्मणिवाक्त नध्या
त्वं तिनिष्ठानत्वं न ॥

पूर्त्ति : । स्त्री० पर्याप्ते । उपसम्पन्ने
। पूरणे ॥

पूर्व । त्रि० पूर्वजे ॥ प्राचि ॥ आद्ये
॥ अग्र ॥ श्रुतिभेदे । न० कारणे
। पूर्वभाविनि ॥ पुं० अति
क्रान्ते ॥ पूर्वति । पूर्वपूरणे । अ
च् । पु० ॥

पूर्वगङ्गा । स्त्री० रेवायाम् । नर्मदान
द्याम् ॥ पूर्वाचासौगङ्गाच ॥

पूर्वज । पुं० ज्येष्ठभ्रातरि ॥ अनादौ ॥

पूर्वजा : । पुं० भूमिदिव्यपितृगणे ।
व्यसनेषु । कव्यवालादिषु ॥ पू
र्वस्मिन्कालेजात: सप्तम्याजनेड ॥

पूर्वजा । स्त्री० ज्येष्ठभगिन्याम् ॥ टा
प् ॥

पूर्वजिन : । पुं० अतीतजिनवि० ।
मञ्जुघोषे । शार्दूलवाहने ॥

पूर्वदिक्पति : । पुं० इन्द्रे ॥

पूर्वदिक् । स्त्री० प्राच्यांदिशि । पूर्व
स्याम् ॥

पूर्वदेव । पुं० असुरे । दैत्ये ॥ पूर्वश्चा
सौदेवश्च । पूर्वापरप्रथमेत्यादिना
समास : ॥ यद्वा । पूर्वदेव । अ
न्यायाद्विदेवत्त्वाद्भ्रष्ट : । सुप्सुपे
तिसमास ॥

पूर्वदेश । पुं० सूर्योदयोपलक्षितेदेशे
। वर्तनौ ॥

पूर्वपक्ष । पुं० शुक्लपक्षे ॥ पूर्वश्चासौ
पक्षश्च ॥ शास्त्रीयप्रश्ने । सिद्धान्त
विरुद्धकोटौ । चोद्ये । देश्ये ।
फक्किकायाम् ॥

पूर्वपक्षपाद : । पुं० चतुष्पाद्व्यवहा
रान्तर्गतप्रथमेपादे । भाषायाम् ।
प्रतिज्ञायाम् । पत्रे ॥

पूर्वपर्वत । पुं० उदयाचले ॥ पूर्वप
र्वत : ॥

पूर्वफल्गुनी । स्त्री० अश्विन्यादिनक्ष
त्रान्तर्गतैकादशेनक्षत्रे ॥ तत्रजात
स्यफलंयथा । शूरस्त्यागीसाहसी
भूमिभर्त्ताकोपाक्रान्त : सत्यशिरा
लोलितश्च : । धूर्त क्रूरोव्यग्रतवाता
धिक : प्राक्फल्गुन्यस्य जन्मकाले
यस्य ॥

पूर्वफल्गुनीभव : । पुं० बृहस्पतौ ॥

पूर्वभद्रपद: । पुं० प्रोष्ठपदासु । पञ्च
विंशतिमेनक्षत्रे ॥

पूर्वभद्रपदा : } स्त्री० { अश्विन्यादिस
पूर्वभाद्रपदा: } { प्तविंशतिनक्ष

त्रान्तर्गतपञ्चविंशतितमेनक्षत्रे । प्रो

ष्टपदासु ॥ तत्रजातस्यफल । जितेन्द्रिय ' सर्वकलासुदक्षोजितारिपक्ष खलुतस्यनित्यम् । भवेन्मनुष्यानुसुतरामपूर्वापूर्वापदाभाद्रपदाप्रसूतौ ॥ पूर्वाश्वताभाद्रपदाश्च ॥ एकवचनान्तोपि ॥

पूर्वयक्ष । पु॰ जिनवि॰ । अलेन्द्रे । मणिभद्रे ॥

पूर्वरङ्ग । पु॰ नाट्यशालायाम् ॥ नाट्योपक्रमे । प्राक्सङ्गीते । गुणनिकायाम् ॥ रङ्गप्रधानाद्योरङ्गविघ्नशान्तिकारीनान्दीपाठगीतवादित्रायनेकाङ्गविशिष्टोनाट्यादौकर्त्तव्यः कर्म्मविशेष पूर्वरङ्ग । तदुक्तवसन्तराजीये । यन्नाट्यवस्तुन पूर्वरङ्ग विघ्नोपशान्तये । कुशीलवा प्रकुर्वन्तिपूर्वरङ्ग ' प्रकीर्त्तित इति ॥ पूर्वरङ्ग विधायादौसूत्रधारेविनिर्गते । प्रविश्यतद्वदपर काव्यमास्थापयेन्नट ॥ प्रथमपूर्वरङ्गश्चतत . प्रस्तावनेतिच । आरम्भे सर्वनाट्यानामेतत्सामान्यमिष्यते ॥ पूर्वरज्यतेऽस्मिन् । रञ्जे घञ् । कुत्वम् ॥

पूर्वराग । पु॰ नायिकानायिकयोर्दशाविशेषे ॥ श्रवणाद्दर्शनाद्वापिमिथ सगूढरागयो । दशाविशेषो योऽप्राप्तौपूर्वराग सउच्यते ॥ इ॰ ॥

पूर्वरात्र . । पु॰ रात्रे .पूर्वभागे ॥ रात्राह्नाहा : पुंसि ॥

पूर्वरूपम् । न॰ पूर्वलक्षणे ॥ वैद्यकेभाविव्याधिबोधकचिह्ने ॥

पूर्ववत् । न॰ अनुमानविशेषे ॥ यथा । दृष्टस्वलक्षणसामान्यविषयवत् । तत्पूर्ववदुच्यते । पूर्वप्रसिद्धम्दृष्टस्वलक्षणसामान्यमितियावत् । तद्यस्यविषयत्वे नास्ति । अनुमानज्ञानस्येतिपूर्ववत् । यथाधूमाद्वह्नित्वसामान्यविशेष . पर्वतेनुमीयते । तस्यवह्नित्वसामान्यस्यस्वलक्षणवह्निविशेषोदृष्टोरसवत्याम् । वीतावीतभेदात्तद्विविधम् ॥

पूर्ववादी । त्रि॰ प्रागभियोक्तरि । प्रथमविवादिनि ॥

पूर्ववित् । त्रि॰ अतीतज्ञे ॥

पूर्वशैल . । पु॰ उदयपर्वते ॥

पूर्वसर । त्रि॰ अग्रगामिनि ॥

पूर्वा । स्त्री॰ पूर्वदिशि । प्राच्याम् ॥ तद्दिग्भववायुगुणा । पूर्वस्तुमधुरोवात स्निग्ध कटुरसान्वित । गुरुर्विदाहशमनोवातद ' पित्तनाशन ' ॥ इति ॥

पूर्वाद्रि । पु॰ उदयाचले । दिनमूर्द्धनि ॥

पूर्वाषाढा । स्त्री॰ अश्विन्यादिसप्तविंशतिनक्षत्रान्तर्गतविंशतिसंख्याकनक्षत्रे ॥ तत्रजातस्यफलंयथा । भूयोभूय . सूयमानानुरक्तो भक्तोदेवेज्यमान्योतिदक्ष . । पूर्वाषाढाक-

न्मकालेयदिष्याद्राषाढ स्याद्वैरि वर्गेनितान्तम् ॥ पूसावर्बाचाषाढाच ॥

पूर्वाह्ण । पु॰ द्विधाविभक्तदिनस्य पूर्वभागे ॥ यथा । आवर्तनात्तु पूर्वाह्णोह्यपराह्णस्तत पर । आवर्तनात्॰वासरस्यच्छायापरिवर्तना त्प्रागितिशेष. ॥ त्रिधाविभक्तदिनस्यप्रथमभागे ॥ सचत्रिंशद्दण्डदिनमानेसूर्योदयावधिदशदण्डात्मक. काल यथा । पूर्वाह्णोवैदेवाना मध्य दिनमनुष्याणामपराह्ण पितृणामितिश्रुति ॥ अह्न. पूर्वम् । पूर्वापराधरेत्येकदेशिसमास. । राजाह सखिभ्यजिष्टतिटच् । अह्लादेशोणत्वम् ॥

पूर्वाह्णेतनम् । त्रि॰ पौर्वाह्णिके ॥ पूर्वाह्णेभव । विभाषापूर्वाह्णापराह्णाभ्याम्॰इतिट्युट्युलौतुट्च । घकालतनेष्विस्यलुक् ॥

पूर्वेद्यु । अ॰ प्रात काले । धर्मवासरे ॥ पूर्वस्मिन्नहनि ॥ इत्य मद्दिल्यादिनापूर्वशब्दादेद्युस्प्रत्ययो निपात्यते ॥

पूष । पु॰ ब्रह्मदारुणि । तूत॰इ॰भा॰ ॥ पूषवृक्षी । इगुपधात्क ॥

पूषक । पु॰ ब्रह्मदारुणि ॥ पूषएवक ॥

पूषा । पु॰ सूर्ये ॥ जगत पोषणात् । पुष्णाति । पुषपुष्टौ । श्वन्नुक्षन्पूषन्निति निपातित ।

पूषभाषा । स्त्री॰ अमरावत्याम् । इन्द्रनगर्याम् । सुरपुर्याम् ॥

पूषसुहृत् । पु॰ शिवे ॥

पूषा । स्त्री॰ पिङ्गलापृष्ठवर्त्तिन्याना-ड्याम् ॥ पूषातुपिङ्गलापृष्ठे नीलजीमूतसन्निभा । याम्यभागस्यनेत्रान्तायावत्पादतलगता ॥

पृक्का । स्त्री॰ मरुन्मालायाम् । पिशुनायामोषधौ । असारक॰इ॰भा॰ । पिर्डि॰इ॰गौ॰भा॰स्पृश्यते।स्पृशस्पर्शने । बा॰ कक् । पृ॰ ॥

पृक्तम् । न॰ धने ॥ त्रि॰ क्षिते ॥ सम्पर्कयुक्ते ॥ पृच्यते । पृची॰ । क्त ॥

पृक्ति । स्त्री॰ सम्पर्के । स्पृष्टौ । स्पर्शे ॥ पर्चनम् । पृचीसम्पर्के । क्तिन् ॥

पृच्छा । स्त्री॰ अनुयोगे । प्रश्ने ॥ प्रच्छनम् । प्रच्छज्ञीप्सायाम् । गुरोश्चहलइत्य । सम्प्रसारणम् ॥

पृच्छितनु । पु॰ प्रश्नलग्ने ॥

पृच्छ्यम् । त्रि॰ प्रष्टव्ये ॥

पृतना । स्त्री॰ सेनामात्रे ॥ सेनाविशेषे । तिसृषुवाहिनीषु ॥ अत्रभा ॥ २४३ । रथा २४३ । अश्वा ७२९ । पादातिका १२१५ । समस्तसङ्ख्ययाखत्रिचतुर्विंशतिभि स्मृता । २४३॰ ॥ प्रियते । पृङ्व्या-

रैव । सञ्ज्ञायांकन् ॥ यद्वा प्रथते ॥ प्रथप्रख्याने । पर्थयति॰पथ्यं तैवा । पृथुप्रक्षेपे । चु॰ । अर्भकपृथुकेति पृथेर्वाकुकन्॰प्रथे सम्प्रसारणञ्च ॥ यद्वा । पृथुकायति । कै शब्दे । आतइतिक ॥ त्रि॰ शिशौ । अर्भके ॥

पृथुका । स्त्री॰ हिङ्गुपत्र्याम् ॥ बालिकायाम् ॥

पृथुकोल । पु॰ राजबदरे ॥

पृथुच्छद । पु॰ दरिदर्भे ॥ त्रि॰ बृहत्पत्रे ॥

पृथुपत्र । पु॰ रक्तलशुने ॥ हरिदर्भे ॥

पृथुपलाशिका । स्त्री॰ शट्याम् ॥

पृथुरोमा । पु॰ मत्स्ये ॥ पृथूनिमहान्तिरोमाण्यस्य । रोमशब्देनपत्रोच्येतिस्वामी । बल्कलमितिसर्वधर ॥ त्रि॰ बृहल्लोमयुक्ते ॥

पृथुल । त्रि॰ विशाले ॥ पृथुपृथुत्वमस्यास्ति । सि॰लच् ॥ पृथु पृथुत्वलातिवा । क ॥

पृथुला । स्त्री॰ हिङ्गुपत्र्याम् ॥ टाप् ॥

पृथुशिम्ब । पुं॰ श्योनाकप्रभेदे ॥

पृथुशेखर । पु॰ पर्वते ॥ पृथुर्महानृशेखरोऽस्य ॥

पृथुसेन । पु॰ राज्ञि ॥ पृथ्वीसेनायस्य ॥

पृथुस्कन्ध । पु॰ शूकरे ॥

पृथूदकम् । न॰ तीर्थविशेषे प

पृथूदर । पुं॰ मेषे ॥ त्रि॰ बृहत्कुक्षौ ॥

पृथ्वी । स्त्री॰ भूमौ । अवलायाम् । धरायाम् ॥ म॰ त्वहल्याम्कृपल्याम् हिङ्गु॰पत्र्याम् ॥ कृष्णजीरके ॥ बृहन्मातरि ॥ बृहदेलायाम् ॥ पुनर्नवायाम् ॥ प्रथते प्रथविस्तारे॰ प्रख्यानेवा । प्रथिम्रदिभ्रस्जासम्प्रसारणमितिकु । वोतोगुणवचनादितिङीष् ॥ वर्णवृत्तविशेषे । तल्लक्षणं यथा । जसौजसयलावसुग्रहयतिश्चपृथ्वीगुरुरिति ॥ अपिच । पयोधरपयुतास्फुरत्कनकयुग्मताटङ्किनीसुवर्णरुचिकङ्कणाललितभावबन्नूपुरा । सुवर्णरुचिरालसत्कुवलयारुपवत्कुण्डलाभुजङ्गपतिवर्णिताहरतिहन्तपृथ्वीमम ॥ यथा । चताधरतटीवनस्थसितमङ्गरागव्ययोहशोरपिचशोणिमाभवतिकारणादन्यत । इदतवपरप्रियानिभृतसङ्गमव्यञ्जकमुखेयदिदमञ्जनरहसिचार्द्धचन्द्रगले ॥

पृथ्वीका । स्त्री॰ बृहदेलायाम् ॥ कृष्णजीरके ॥ कलाजाज्याम् ॥ हिङ्गुपत्र्याम् ॥ प्रथते । प्रथप्रख्याने । कर्फरीकादयश्चेतिसाधु ॥

पृथ्वीकुरवक । पुं॰ श्वेतमन्दारे ॥

पृथ्वीजम् । न॰ गडलवणे ॥

पृदाकु । पुं० वृश्चिके ॥ व्याघ्रे ॥ सर्पे ॥ चित्रके ॥ पर्दते । पर्द० । पर्देर्निर्हस्य सारयमल्लोपश्चेतिकाकुप्रत्ययः ॥

पृश्नि । स्त्री० रश्मौ ॥ त्रि० अल्पतनौ ॥ स्पृशति स्पृश्यतेवा । स्पृश संस्पर्शे । घृपृश्नीतिसाधु ॥ पृच्छति पृच्छ्यतेवा । पर्षति पृष्यते वा । प्रच्छज्ञीप्सायाम् । पृषुसेचने वा । पूर्ववत्साधु ॥

पृश्निका । स्त्री० कुम्भिकायाम् ॥

पृश्निगर्भ । पु० गदाग्रजे । श्रीकृष्णे ॥

पृश्निपर्णी । स्त्री० पृथक्पर्ण्याम् । अङ्घ्रिवल्लिकायाम् । चकरीत० हू० पिठवनि० हू० च० भा० । चाकुलिया० हू० गौ० भा० ॥ पृश्निपर्णीत्रिदोषघ्नीवृष्योष्णामधुरासरा । हन्तिदाहज्वरश्वासरक्तातीसारतृड्वमीः ॥ पृश्निरल्पपर्णमस्याः । पाककर्णेतिङीष् ॥

पृश्निभद्र । पु० श्रीकृष्णे ॥

पृश्निशृङ्ग । पुं० विष्णौ ॥ गणेशे ॥

पृश्नी । स्त्री० वारिपर्ण्याम् ॥

पृषत् । पु० मृगे ॥ न० विन्दौ ॥ त्रि० श्वेतविन्दुयुक्ते ॥ पर्षति । पृषुसेचने । वर्त्तमानेपृषद्बृहन्महदिति अतिप्रत्ययोगुणाभावश्चनिपात्यते । शतृवदस्यकार्यम् ॥

पृषत । पुं० पृषाकमृगे । चित्रमृगे ॥ यथा । पृषतश्चन्द्रविन्दुःस्याद्धरिणात्किञ्चिदल्पकः ॥ पृषतस्तुभवेत्स्वादुर्ग्राहकःशीतलोलघुः । दीपनोरोचनः श्वासज्वरदोषक्षयास्त्रजित् ॥ इति ॥ विन्दौ ॥ त्रि० श्वेतविन्दुयुक्ते ॥ पर्षति । पृषु० । पृषिरञ्जिभ्यांकिदित्यतच् ॥ यथा । पृषता विन्दव . सन्त्यस्य । अर्शआद्यच् ॥

पृषताम्पति । पुं० वायौ ॥

पृषताश्व: । पु० वायौ । अनिले ॥ पृषतोमृगविशेषोऽश्वोवाहनमस्य ॥

पृषती । स्त्री० मृग्याम् ॥

पृषत्क . । पु० वाणे । शरे ॥ पर्षति पृषु० । लट शतृ । संज्ञापूर्वकत्वान्नगुणः ॥ यथा । वर्त्तमाने पृषन्महद्दितिसाधु . स्वार्थेकन् ॥

पृषदश्व . । पु० गन्धवहे । पवने । वायौ ॥ पृषन्मृगभेदोऽश्वोवाहनमस्य ॥ पृषतामम्बुकणानामश्ववद्वेतिवा ॥

पृषदाज्यम् । न० सदध्याज्ये । दधिमिश्रितघृते ॥ पृषच्चतदाज्यञ्च ॥ यद्वा । पृषद्भिः सहितमाज्यम् ॥

पृषद्वल : । पुं० वायुश्वे ॥

पृषन्ति । पु० विन्दौ ॥ यथा । पय. पृषन्तिभिः स्पृष्टानातिवाताः शनैः . शनैरितिजाम्बवतीविजयकाव्यम् ॥

पृषभाषा । स्त्री० इन्द्रपुर्याम् ॥

पृषाकरा । स्त्री० क्षुद्राश्मनि । वट खराद्र०भा० ॥
पृषातकम् । न० सदध्याज्ये ॥
पृष्टम् । न० सामगानामाध्यन्दिन सवनेगीयमानस्तोत्राणानामधेये ॥ त्रि० कृतप्रश्ने । उपामन्त्रिते ॥ पृच्छे क्त ॥
पृष्टव्य । त्रि० जिज्ञासिते ॥
पृष्ठम् । न० शरीरपश्चाद्भागे । पार्श्व स्थाने । पीठ०इ०भा० ॥ अस्यशु भाशुभलक्षणयथा । सुस्निग्ध मास लपृष्ठमभग्नमप्यरोमशम् । सध नानांविपर्यस्त निर्द्धनानाप्रकीर्त्ति तमितिसमुद्र ॥ चरममात्रे ॥ पृष्यते । पृषु० । तिथपृष्ठगूथेति साधु ॥ स्तोत्रविशेषेपिपृष्ठम्० त्रि वाधिकरणे० पृष्ठे. स्तुवतइत्यादो तथानिर्णयात् ॥
पृष्ठग्रन्थि . । पुं० गडौ । कूब० इ० भा० ॥
पृष्ठत । अ० पश्चात् । पृष्ठदेशे ॥ पृष्ठेइति । आद्यादित्वात्तसि ॥
पृष्ठदृष्टि । पु० भल्लूके ॥
पृष्ठमासाद । त्रि० परोक्षे दोषाभि धायिनि ॥ वाक्याभिधायिनि ॥ इ० बिकाणडशेष ॥
पृष्ठमांसादनम् । न० परोक्षे दोषकी र्त्तने ॥ त्रि० तद्वति ॥
पृष्ठवंश . । पु० रीढके । पृष्ठास्थि नि ॥ सतुगर्भेमासमात्रेणभवति ॥
पृष्ठवह । पु० पृष्ठ्याश्वे ॥
पृष्ठवास्तु । न० गृहस्योपरिगृहे ॥
पृष्ठवाट्०ड् । पु० युगपार्श्वगवृषे । पृष्ठवाहिनि ॥
पृष्ठवाह । पु० }
पृष्ठवाहक . । पु० } वृषे ॥
पृष्ठवाह्य । पु० भारवाहकवृषे । स्त्रीरिथि । पृष्ठि ॥
पृष्ठशृङ्ग । पु० वनच्छागे ॥
पृष्ठशृङ्गी । पु० शभीरो । सैरिभे ॥ षंढ । भीमसेने । वृकोदरे ॥
पृष्ठशायन । पुं० सान्यविशेषे ॥ मत कुजे ॥
पृष्ठी । पुं० मत्स्यविशेषे ॥
पृष्ठोदय । पुं० राशिविशेषे ॥ मेषो-वृषकर्कटधनुर्मकरश्च । पृष्ठो-दया । षडेवेसमीनेश्चापितथैवच ॥
पृष्ठ्य । पुं० स्त्रीरिथि । पृष्ठेनभारवह नशीलेघोटके । न० पृष्ठस्तुते ॥ य-ज्ञविषयेउह । स्मरन्ति । पृष्ठ्यानास मूह । पृष्ठ्यन । प्रशस्तमतिश यितपृष्ठमस्य । अर्शआदित्वादच्‌पीतियद्वा
पृश्नि । पुं० सूर्ये ॥
पृश्निका } स्त्री० } कन्तुरी । कुम्भ्या
पृश्नी । [illegible]
मेचक . । पु० कृष्णे । कायसवर्णे । कौशिके । धूमे । गजलाङ्गूल मूले । तज्जनीपक्षाकृमासरिवडवि

प्रेषे ॥ पचति॰पच्यतेवा॰दु वर्ब न । डुपचष्॰ ॥ पचिमच्योरित्वो-पधायाइतिवुन् । अतइत्वम् । पु गन्तेतिगुण पर्यङ्क॰ मेषि॰ । यूके ॥
पेचकी । पु॰ हस्तिनि ॥
पेचिल । पु॰ गजे । हस्तिनि ॥
पेचु । न॰ पेचुल्याम् ॥
पेचुकम् । न॰ नाडीचशाके पेचुल्याम् ॥ त्रिकाण्डशेषेकेचुकमितिपाठ
पेचुली । स्त्री॰ पेचुनि । नाडीचशाके
पेट । पु॰ प्रहस्ते । पेटति । पिट॰ । प॰ अच् ॥
पेटक । पु॰ न॰ पिटके । पुस्तकादीनामञ्जूषायाम् । पिटार॰ इ॰ भा॰ ॥ त्रि॰ कदम्बके । समूहे ॥ पेटति । पिटशब्दसंघातयो । ण्वुल् ॥
पेटाक । पु॰ पेडायाम् । पिटके ॥
पेटिका । स्त्री॰ हंसविशेषे॰ । कुवेराख्याम् । कणाहन्तिकायाम् ॥
पेटी । त्रि॰ पिटके ॥
पेडा । स्त्री॰ पिटके । मञ्जूषायाम् । वृहत्पिटाके ॥ पिण्डते । पिडिसघाते । प॰ अच् । अनित्यत्वान्नुम् ॥
पेत्वम् । न॰ अमृते ॥ घृते ॥ पीयते । पा॰ । अन्येभ्योपिदृश्यतइति॰ त्वन् ॥
पेपीयमान । त्रि॰ अत्यासक्त्यापीयमाने ॥
पेयम् । न॰ पयसि । जले ॥ दुग्धे ॥ मद्ये ॥ अष्टविधान्नान्तर्गतान्नवि॰ । यथा। भोज्यपेयतथाचूष्यलेह्यखाद्यञ्च चर्व्यकम् । निष्यं चञ्च वमत्व्य स्याद॰ न्नमष्टविधम्स्मृतम् ॥ इ॰ रा॰ नि॰ ॥ त्रि॰ पानयोग्यद्रव्ये । पातव्ये ॥ पानुयोग्यम् । पा॰ । यत् । ईद्यति । गुण ॥
पेया । स्त्री॰ आचामाम् ॥ अन्नमण्ड ॥ सिक्थसमन्वितपेयद्रव्ये ॥ पेया विभिर्गुणाढ्य । चतुर्दशगुणेनीरेरक्ता शाल्यादिभि : कृता । द्रवाधिका- स्वल्पसिक्थापेयाप्रोक्ताभिषग्वरे ॥ साविष्टम्भीयाद्रिणीलघ्वाग्निवृद्धिविधायिनी ॥ स्वेद्राग्निजननीक्षियावलवर्द्धनुलोमिनी । शुष्कीसैंधवसयुक्तादीपनीपाचनीचसा ॥ आमशूलहरीकथ्याख्यातिमन्यविमार्गिणी ॥ पानुयोग्या । पा॰ । यत् । ईद्गुणौ । टाप् ॥
पेयूष । पु॰ न॰ अमृते ॥ नव्यदुग्धे । सप्तदिवसावधिक्षीरे ॥ आसप्तराचप्रभवक्षीरपेयूषउच्यते ॥ पीयति॰ पीयतेऽनेनवा । पीयइतिसौत्रोधातु॰ प्रीतौ । पीयेरूषन् । बहुलवचनात्गुण॰ ॥ अग्निसंयोगात्कठिनतागतेनवप्रसूताया गोक्षीरे ॥ क्षीरसतत्कालसूतायाधन

पियूषमुच्यते ॥ नव्यप्रसूते ॥

पेरु । पुं० सूर्ये ।। वह्नौ ॥ समुद्रे ॥ पीयते । पीङ्पाने । निपीभ्यारु ॥

पेरोजम् । न० उपरत्नवि० । पेरजँ । पिरोजा०इ०भा० ॥ तद्द्विविधम् । भस्माङ्गहरितञ्च । तद्गुणा । पेरोजसुकषायस्याम्मधुरदीपर्नपरम् । स्थावरजङ्गमञ्चैवसयोगाच्चयथाविषम् ॥ तत्सर्वनाशयेच्छीघ्रं शूलभूतादिदोषजम् । पाठान्तरम् यथा ॥ पेरोजसुकषायस्याम्मधुरदीपनद्रयो । स्थावरादिविषघ्न स्याद्धरितस्यापरस्य ॥ शीताङ्गनाशयेच्छीघ्रं शूलतिमिरभूतजम् ॥ इ० रा० नि० ॥

पेलम् । न० अण्डकोषे ॥

पेलवम् । त्रि० विरले ॥ अचसावक्तायत्व प्रकार . ॥ पेलनम् । पिलक्षेपे । घञ् । पेलीस्यास्ति । अन्यभ्योपीतिव . ॥ कोमले कृशे ॥

पेवलि । स्त्री० नृत्यविशेषे ॥ यथा । ताण्डवञ्चतथालास्य द्विविधनृत्यमुच्यते । पेवलिर्बहुरूपाचताण्ड०द्विविधमतम् ॥ अङ्गविक्षेपबाहुल्यतथाभिनयशून्यता । यत्रसापेवलिस्तस्या सञ्ज्ञादेशीतिलोकत ॥ छेदनभेदनयत्रबहुरूपामुखावली ॥ ताण्डवबहुरूपन्तन्नाकुणागलमुक्तमिति ॥

पेशलम् । न० सौकुमार्ये ॥ त्रि० रुचिरे । रम्ये । चारौ । सुन्दरे ॥ दक्षे । कुशले । चतुरे ॥ कोमले ॥ पिशअवयवे । भावेघञ् । पेशलाति । ला० । क ॥ वा० पिशेरलच्वा ॥ पेशोस्यास्ति । सिध्मादित्वालच्चा ॥ धूर्ते ।। कर्मणामनसावाचावपुषाचशोभनत्वात्०पेशलोविष्णुर्वासुदेव ॥ तथाविधोन्योपि ॥

पेश । न० रूपे ॥

पेशस्कृत् । पुं० हस्ते ॥ कीटवि० । किमिरकी० इ० गौ० भा० ॥

पेशि । पुं० शतकोटौ । वज्रे ॥ स्त्री० अण्डे ॥ पिशिअवयवे । इगुपधात्कित्‌ इत्यादिना०इन् ॥ माषविदले ॥

पेशी । स्त्री० सुपक्वकलिके ॥ मांस्याम् ॥ अण्डभेदे ॥ कृदिकारादक्तिनइतिङीष् । गौरादिर्वा ॥ पिशाच्याम् ॥ राक्षसीभेदे ॥ नदीविशेषे ॥

पेशीकोष । पुं० पक्षिडिम्बे । अण्डे ॥ पेशीनामांसखण्डाना कोषोभाण्डागारइतिस्वामी ॥

पेषणम् । न० चूर्णने । पिष्लृसचूर्णने भावेल्युट् ॥ खले ॥ स्नुहीद्रुमे ॥

पेषणि : । स्त्री० } पेषणशिलायाम् ।
पेषणी : । } दृषदुपलात्मि-

कायाम् । पट्टे । यज्ञकच्छपे । सि
ल० द्रू० भा० ॥

पैत्रश . । त्रि० पैशले ॥

पैयाक्ष । पु० पेषग्राम ॥

पैशुष । पु० कर्णे ॥

पैठर : । त्रि० उख्ये । स्थालीपक्वमा
सादौ ॥ पिठरेसंस्कृतम् । संस्कृतभक्षा
इत्यण् ॥

पैठीनसि . । पुं० स्मृतिकारकेमुनि
विशेषे ॥

पैण्डिन्यम् । न० भैक्षजीविकायाम् ॥

पैतामहम् । त्रि० पित्र्ये । पितामह
सम्बन्धिधनादौ ॥ पितामहस्येदम्
। तस्येदमित्यण् ॥ स्त्रियांपैतामही

पैतृकम् । त्रि० पितृसम्बन्धिनिधनादौ
॥ सुखेनस्त्रीयतेयत्रसदेश खलुपै
तृक ॥ पितुरागतम् । पितुर्यश्चे
तिचकाराट्ठञ् ॥ ङीपि०पैतृकीवि
द्या ॥

पैतृकभूमि स्त्री०।पितृसम्बन्धिस्थाने॥

पैतृष्वसेय । त्रि० पितुर्भगिनीसन्त
तौ॥ पितृष्वसुरपत्यम् । ढकिलोप
। अतएवज्ञापकाड्ढक् ॥ स्त्रियांपैतृ
ष्वसेयी ॥

पैतृष्वस्रीय । त्रि० पितुर्भागिनेये ।
पैतृष्वसेये ॥ पितृष्वसुरपत्यम् ।
पितृष्वसुश्छण् ॥

पैत्त : । त्रि० पैत्तिके ॥

पैत्तिकम् । त्रि० पित्तजव्याधौ । पि-
त्तसम्भवे ॥ पित्तस्यशमनकोपनवा
वातपित्तश्लेष्मभ्य शमनकोपनयो
रितिठञ् ॥

पैत्रम् । न० पितृतीर्थे । तर्जन्यङ्गुष्ठयो
र्मध्ये ॥ पितॄणामिदम् । तस्येद
मित्यण् ॥ त्रि० पितृसम्बन्धिनि ॥

पैत्राहोरात्र . । पुं० पितृलोकस्यदि
वारात्रौ । नृणांमासि ॥ कृष्णपक्ष
पितॄणांदिनम्०शुक्लपक्षोरात्रि ।
पितॄणामयम्०पैत्र : । पैत्रश्चासा
वहोरात्रश्च ॥

पैत्र्य । पु० देवसर्गप्रभेदे ॥

पैप्पलम् । त्रि० पिप्पलकाष्ठे ॥ पि-
प्पलभस्मनि ॥ पिप्पलस्यावयवोवि
कारोवा । अवयवेचेत्यण् ॥

पैल । पुं० ऋषिविशेषे । ऋग्वेदधा
रकेव्यासशिष्ये ॥ पीलायाअपत्यम्
। पीलायावेत्यण् ॥

पैलेय । पु० पैले ॥ पीलायाअपत्य
म् । अणभावे० द्व्यच इति० ढक् ॥

पैशाच । पु० अष्टप्रकारविवाहान्त
र्गताष्टमेविवाहे ॥ पैशाच . कन्य-
काछलात् । छलमाहमनु । सुप्तां
मत्तांप्रमत्तांवारहोयत्रोपगच्छति ।
सपापिष्ठोविवाहानांपैशाचश्चाष्टमो
धम ॥ पिशाचस्यायम् । अण् ॥
पिशाचएववा । स्वार्थिक . प्रज्ञाद्य
ण् ॥ देवसर्गविशेषे ॥ त्रि० पिशाच
सम्बन्धिन ॥

पैशाचिक । त्रि० पिशाचसम्बन्धिनि ॥

पैशुनम् । न० परस्मै परोक्षपरदोषप्रकाशने ॥ पिशुनस्यकर्मभावोवा । युं० । अण्० ॥

पैशुन्यम् । न० अविज्ञातदोषाविष्करणे । पिशुनतायाम् । खलतायाम् ॥ पिशुनस्यदुर्जनस्यकर्मभावोवा । ब्रा० ष्यञ् ॥ परोक्षेपरदूषणकथने ॥ गुरुनृपतिबन्धुभ्रातृमित्त्रसकाशेषु धीपघातार्थेदोषोपाख्यानं पैशुन्यमितिवदन्ति ॥

पैष्ट । त्रि० पिष्टसम्बन्धिनि ॥

पैष्टिकम् । न० मद्यविशेषे ॥ पिष्टानां समूहे ॥

पैष्टी । स्त्री० विविधधान्यविकारजायामदिरायाम् । वारुण्याम् ॥ पैष्टीकटूष्णतीक्ष्णास्यादीपनीरोचनीसमा परा । वातहृत्कफकृत्स्वीषत्पित्तकृन्मोहनीचसा ॥ पिष्टस्येयम् । तस्येदमित्यण् । ङीप्

पोगण्ड । पुं० बालके ॥ बाल्याद्यो डषाद्वर्षात्पोगण्डस्तापिशब्दित इतिनारद ॥ दशवर्षीयबालके । त्रि० विकलाङ्गे ॥ पवते० पुनाति वा । विच् । पोगण्डएकदेशोस्य ॥

पोट: । पुं० वेश्मभूमौ । वास्तौ ॥

पोटगल । पुं० नले । नरकट० नरसल० इ० भा० ॥ काशे । इक्षुगन्धायाम् । कांस० इ० भा० ॥ मत्स्यविशेषे ॥ पोटेनसंश्लेषेणगलति । गलक्षरणे० सवधेच । अच् ॥

पोटा । स्त्री० स्त्रीपुंसलक्षणायाम् ॥ स्त्रीपुंसयो लक्षणश्मश्रुादि चिह्नयुक्तायाम्योषिति ॥ पोटयति । पुट भाषार्थसंवादि । पचाद्यच् ॥ दास्याम् ॥

पोट्टली । स्त्री० पोट्टलिकायाम् ॥ पोटली० इ० भा० ॥ यथा ॥ शुद्ध्यर्थं त्रिफलाक्वाथेगुडूच्या: क्वाथएववा । दोलायन्त्रे पुर: पाच्य: पोट्टल्या वस्त्रबद्धया ॥

पोडु । पुं० कपालास्थितले ॥

पोत । पुं० शिशौ ॥ वस्त्रे । समुद्रतरणार्थेनौकाविशेषे । समुद्रयाने । वार्वटे । जहाज० इ० आधुनिकभाषा ॥ यथा । समुद्रयानेरत्नानिमहामौल्यानिसाधुभिः । रत्नपारीक्षकै सार्द्धमानयिष्येबहूनिच ॥ शुकेनसहसप्राप्तोमहान्तञ्च वणार्णवम् । पोताऋढास्तत सर्वे पोतवाहैरुपास्थिता ॥ अपारेदुस्तरेऽगाधेयातिवेगेननिश्चय । इ० वाराहेगोकर्णमाहात्म्याध्याय ॥ पोतोदुस्तरवारिराशितरणेदीपोन्धकारागमे इत्यादि ॥ गृहस्थाने । पोता० इ० गौ० भा० ॥ वास्तौ ॥ दशवर्षीयगजे ॥ पुनाति० पूयते

रवौ ॥
पोली । स्त्री० पिष्टकवि० । पूपाख्या म. । चर्पव्याम् ॥
पोष । पुं० पोषणे ॥
पोषक । त्रि० पालनकर्त्तरि ॥
पोषणम् । न० पुष्टौ । पुषपुष्टौ ॥ ल्युट् ॥ भृतौ ॥
पोषयित्नुः । पु० कोकिले । भर्त्तरि ॥ स्त्रियां ॥ त्रि० पोषके । पोषणकर्त्तरि । पोषयति । पुष० । स्तनि हृषिपुषीत्यादिना० इत्नुच् ॥
पोष्टा । पुं० पूतीके । काँटाकरञ्ज० इ० गौ० भा० ॥ त्रि० पोषणकर्त्तरि ॥ पुष्णाति । पुष० । तृच् ॥
पोष्टृवर । त्रि० पोषकश्रेष्ठे ॥
पोष्य । त्रि० प्रतिपाल्ये । पोषणी ये । अवश्यसम्वर्धनीये पोष्यवर्गे ॥
पोष्यपुत्रः । पु० पुत्रप्रतिनिधौपाल नासुतत्व प्राप्ते ॥
पोष्यवर्ग । पुं० परिजने । प्रतिपाल नीयगणे ॥ यथा मातापितागुरु पत्नीत्वपत्यानिसमाश्रिता । अभ्या गतोऽतिथिश्चाग्नि. पोष्यवर्गाप्र- मीमव ॥
अपिच । मातापितागुरुर्भ्राताप्रजा दीना . समाश्रिता । अभ्यागतो तिथिश्चाग्नि पोष्यवर्गउदाहृत . ॥ भरणपोष्यवर्गस्य प्रशस्त स्वर्गसाधन म् । नरकपीडनेचास्यतस्माद्यत्नेन तभरेत् ॥ पोष्याणावर्ग ॥
पौंसवनम् । न० पुंसवनसस्कारे ॥
पौंस्नम् । न० पुंस्त्वे ॥ पुंसइदम् । स्त्रीपुंसाभ्यानञ्स्नञौ भवनादिति स्नञ् ॥ त्रि० पुंसुभवे ॥ स्त्रियापौं स्नी ॥
पौगण्डम् । न० पञ्चाब्दानन्तरदशाब्द पर्यन्तायामवस्थायाम् ॥ यथा । कौमारपञ्चमाब्दान्तपौगण्डदशमा वधि । कैशोरमापञ्चदशात्यौवन न्तुततः परमिति ॥ आचार्यप्रमुखा नाङ्घ्रिपौन पौन्धिनतेमंतौ । यतो गण्डावस्थातेनपौगण्ड ' सम्मतोबु धैरित्युक्तेस्तदवस्थावति । त्रि० ॥
पौण्डरीकम् । न० प्रपौण्डरीके ॥ पु- ण्डरीकमिव । शर्करादिभ्योऽण् ॥
पौण्डर्यम् । न० ओषधीभेदे । स्थलप- द्मे । प्रपौण्डरीके ॥ पौण्डर्यमधुरं तिक्तकषायशुक्रलहिमम् । चक्षुष्यं मधुरपाकिवर्ण्यंपित्तकफास्रनुत् ॥
पौण्ड्र । पु० चदेली० इ० प्र० देशे ॥ भीमसेनस्यसङ्ख्ये ॥ पौँडा० इ० प्र० इक्षुविशेषे ॥ पुण्ड्रात् । पुडिखण्डने । स्फायीतिरक् । प्र- ज्ञाद्यण् ॥
पौण्ड्रक । पुं० श्वेतपौंडा० इ०प्र० इक्षौ ॥ वातपित्तप्रशमनोमधुरोर- सपाकयो : । सुशीतोबृंहणोवल्य पौण्ड्रकोभीरुकस्तथा ॥ पौण्ड्रदेशो

म् ॥

प्रहार. । आघाते । चोट॰फट॰इभा॰ ॥ प्रहरणम् । हृञ्॰ ॥ घञ्॰ ॥ श्रान्ते भीतेत्यक्तशस्त्रे पतितेबालके तथा । प्रहरन्तिनवीरास्ते धर्मएषसनातन . ॥

प्रहारवल्ली । स्त्री॰ मासरोहिण्याम् ।

प्रहास . । पुं॰ अट्टहासे । शिवे ॥ नटे ॥ सोमतीर्थे ॥ अत्यर्थहासे । अनुचिताचरणप्रकाशनेनलज्जोत्पादने ॥ प्रहसनम् । हसे॰ । घञ्॰ ॥

प्रहासी । पुं॰ वासन्तिके । विदूषके । प्रीतदे । भाण्ड॰ इ॰ भा॰ ॥ प्रकृष्टहासयति॰ हसतिवा । णिनि ॥ प्रहासोऽस्यास्तिवा । इनि ॥

प्रहि . । पु॰ कूपे ॥ प्रह्रियते । प्रेहरति . कूपेइति॰ इनि॰ ॥

प्रहितम् । न॰ सूपे ॥ त्रि॰ प्रक्षिप्ते ॥ प्रेरिते ॥ प्रधीयतेस्म । डुधाञ्॰ क्त : । दधातेर्हि ॥

प्रहीण । त्रि॰ विगते । परित्यक्ते । । विहीने ॥ ओहाक्॰ । क्त . ॥ घुमास्थेतीत्वम् । ओदितश्चेतिनिष्ठातस्यन ॥

प्रहीणदोष. । त्रि॰ नितान्तनिर्मलस्वान्त ॥ प्रहीणा . दोषारागादयोयस्य ॥

प्रहुत . । पु॰ पञ्चमहायज्ञान्तर्गतभूतयज्ञे ॥ प्रकर्षेणहूयते । हु॰ । क्त.

प्रहृष्ट । त्रि॰ सन्तुष्टे ॥ प्रकर्षेणहृष्टे ॥

प्रहेणकम् ) न॰ पिष्टकविशेषे । वायने । वाचनके । व्रतोपायने । वायना॰ इ॰ भा॰ ॥
प्रहेलकम् )

प्रहेलिका । स्त्री॰ प्रवह्लिकायाम् । प्रश्नदूत्याम् । दुर्विज्ञानार्थप्रश्ने । पहेली॰ इ॰ भा॰ ॥ लक्षणयथा । व्यक्तीकृत्यकमप्यर्थंस्वरूपार्थस्यगोपनात् । यत्रवाह्यान्तरावर्थौकथ्येते साप्रहेलिका ॥ साद्विधार्थीचशाब्दीचप्रख्याताप्रश्नशासने । आर्थीस्यादर्थविज्ञानाच्छाब्दीशब्दविभागत ॥ आर्थीयथा । तरुण्यालिङ्गितकण्ठेनितम्बस्थलमाश्रित । गुरूणासन्निधानेपिक . कूजतिमुहुर्मुहु. ॥ पानीयकुम्भइति ॥ शाब्दीयथा । सदारिमध्यापिनवैरियुक्तानितान्तरक्ताप्यसितैवनित्यम् । यथोक्तवादिन्यपिनैवदूतीकानामकान्तेतिनिवेदयाशु ॥ सारिका । इति ॥ एवम्॰ सोदर्यवर्येणनितान्तमादौ सम्भावितोनिर्गतभी सभीम : । राजन्भवद्बाहुवलीनतुल्यो निगूढनामात्रकविर्ब्रवीति ॥ अस्याअर्थ . । आदौसोत्॰उकारसहित : । भीसोनिर्गतभी मकार । अर्यवर्येणस्त्रा शिवाचकेनपतिशब्देनसम्भावितपश्चाद्युक्त । भवद्बाहुवलीनतुल्यो

दीर्घ . । तथाच॰उमापतिरितिक वेर्नामाचनिगूढम् । प्रहेलिकायाम् नेयार्थत्वदूरान्वयादिनदूषणमिति ज्ञेयम् ॥ प्रहेलयति॰अभिप्रायंसूचति । हिलभावकरणे । कु न्प्रियिर्स्यि सम्प्रयोरितिक्कुन् ॥

प्रह्लन्न । त्रि॰ हृष्टे । प्रमुदिते । प्रीते ॥ प्रह्लाद्यतेस्म । ह्लादी सुखे च क्त . । रदाभ्यामितिनत्वम् । ह्लादो निष्ठायामितिह्रस्व ॥

प्रह्लाद . । पुं॰निनदे । शब्दे । हर्षे । प्रमोदे ॥ प्रह्लादे । परमभागवतेहिरण्यकशिपो : पुत्रे ॥ प्रकर्षेणह्लादयति॰आनन्दयति॰परमसात्त्विकत्वेनसर्वान्॰इति प्रह्लादोदैत्यानामस्मि भगव तोविभूति ॥

प्रह्व । त्रि॰ प्रवणे । नम्रे । नते । नमनशीले ॥ अनुकूले । प्रह्वयति । ह्वेञ्स्पर्धायाशब्दे च । कविधौसर्वत्रप्रसारणिभ्योडइतिड . ॥ प्रह्वयतेऽसौ । ह्वेञ्॰ । सर्वनिघृष्वेतिसाधु । आकारवकारयोर्लोप । जहातेर्वा ॥ आसक्तौ ॥ शिरसानम्रे ॥ महति ॥ यथा । तदाप्रह्वा.सर्वकार्येविधानश्चास्तुमेशिवे॰इतिदेवीभागवतम् ।

प्रह्वत्वम् । न॰ शिरसानतौ ॥

प्रह्वीभूत । त्रि॰प्रणते । शिरसानम्रे । नमस्कृतवति ॥

प्रांशु : । त्रि॰ उच्चे । उन्नते । तुङ्गे ॥ प्रकृष्टाअंशवोऽस्य ॥ जगतत्रयक्रमणेभगवतिवामने ॥ तोयेतुपतितेहस्तेवामनोभूदवामन । सर्वदेवमयरूपदर्शयामासवैविभु ॥ भूपादौ॰द्यौ शिरश्चास्यचन्द्रादित्यौचचक्षुषी । इत्यादिविश्वरूपदर्शयित्वा॰तस्यविक्रमतोभूमि॰चन्द्रादित्यौस्तनान्तरे ।नभ . प्रक्रममाणस्यनाभ्यान्तौसमवस्थितौ ॥ दिवमाक्रममाणस्यजानुमूलेव्यवस्थिताविति प्राशुत्व दर्शितं॰ इ॰ व॰ ॥

प्राकरणिक : । त्रि॰ प्रकरणागते ॥

प्राकषिक । पुं॰ षिड्गे ॥ मायान्तके ॥ परदारोपजीविनि ॥ प्राकषति । कषहिंसायाम् । प्राङ्गिपर्षिकष इतिक्किकन् ।

प्राकाम्यम् । न॰ महादेवस्याष्टविधेश्वर्यान्तर्गतैश्वर्यविशेषे ॥ स्वच्छन्दानुमतौ । अवसर्गे । स्वाच्छन्द्यानुमने ॥ प्राकाम्यमिच्छानभिघात । यतोभूमावुन्मज्जति॰निमज्जतिच॰यथोदके ॥ प्रकामस्यभाव । ष्यञ् ॥

प्राकार . । पु॰ वरणे ॥ साले । वप्रोपर्यन्यचवा॰इष्टकादिरचितवेष्टने ॥ अस्यपरिमाण यथा । ऊर्द्ध विंशतिहस्तेभ्योनैवकुर्यादगृहगृही । ऊर्द्ध विंशतिहस्तेभ्य : प्राकारनशुभप्रदम् ॥ तस्यद्वारमानम् । प्रस्थेन

स्तवयात्पूर्वंदीर्घंह्रस्वञ्चयथा । गृ हिणाशुभदंद्वारप्राकारस्यगृहस्यच । नमध्यदेशेकर्तव्य किञ्चिन्न्यूनाधि केशुभमिति । ब्र० पु० ॥ प्रक्रिय- ते । डुकृञ्० । कर्मणिघञ् । उप सर्गस्यघञीतिदीर्घ . ॥

प्राकृत . । त्रि० नीचे । प्रकृष्टमकृत मकार्यमस्य ॥ स्वाभाविके । शा- स्त्रासंस्कृतबुद्धौ । बालसमे । स स्कृतेतरभाषायाम् । संस्कृतप्रकृ तिके । भाषाप्रभेदे ॥ प्रकृतौसंस्कृ तेभव ततआगतोवा । तत्रभव. ततआगतइतिवाऽण् ॥ पुं०प्रलय विशेषे । प्रकृतौसस्थितव्यक्तमतीत प्रलयेतुयत् । तस्मात्प्राकृतसञ्ज्ञोय मुच्यतेप्रतिसञ्चर ॥ प्रकृत्यासिद्ध. ॥ पु० प्रकृतिप्रवर्त्तकेभगवति ॥ गु णविशेषे ॥ यथाशैवानामतेधर्मज्ञा नवैराग्यादयोबुद्धिगुणाभावसज्ञया विज्ञाता . तेचसासिद्धिका दैन यिका प्राकृताश्चेतित्रिधाभवन्ति । तत्रप्राकृतोदेहसयोगेव्यक्त . स्वप्ना दिबोधवत् । य. स्वप्नमदमूर्च्छाप्रबु द्धस्य० यथाप्रसुतसंस्कारइवदेहस योगएव व्यज्यतेनदेहापायेपिसम्रा कृतोनामसुखोवि ज्ञेय । इतिशै वा . ॥ त्रि० प्रकृतिसम्बन्धिनि ॥

प्राकृतज्वर । पु० ऋतुज्वरे ॥ यथा । वर्षाशरद्वसन्तेषुत्रिष्वृतुषुक्रमेणवा तपित्तकफजज्वरा । यथा । वर्षा शरद्वसन्तेषुवाताद्यै प्राकृतक्रमा त् । इति ।

प्राकृतदोष । पुं० वर्षाशरद्वसन्तेषुक्र मेणकुपितेषुवातपित्तकफेषु ॥ यथा । चयप्रकोपप्रशमा पित्तस्यप्रावृडा दिषु । क्रमेण : शिशिराद्येषुवायो र्घर्मादिषुविषु ॥ इतिरक्षित : ॥

प्राकृतप्रलय . । पुं० प्रकृतेर्लये ॥ य० निर्गुणस्यचनित्यस्य वाद्यन्तरहित- स्यच । निमेषाणासहस्रेणप्रकृतेर्द ण्डउच्यते॥ षष्टिदण्डात्मकस्तस्यवा सरश्चप्रकीर्तित । मासस्त्रिंशद्दि- वानैर्वर्षैर्द्वादशमासकै ॥ एवञ्च तेशताब्देचश्रीकृष्णे प्रकृतेर्लय. ॥ प्र कृत्याचप्रलीनायातदैवप्राकृतोलय । सर्वा. संहृत्यसाचैकामहाविष्णो: प्रसूश्चया । कृष्णवक्षसिलीनाचमू- लप्रकृतिरीश्वरी ॥ इ० ब्र० ॥ अपि- च का० पु० ॥ प्रकृतौसंस्थितोय स्मात्सर्वस्तन्मात्रसञ्चय. । अह- ङ्कारमहत्तत्त्व गतोयत्प्राकृतोलय ॥ प्रकृतौसस्थितोव्यक्तमतीतप्रलय स्तुयत् । तस्मात्प्राकृतसंज्ञोयमुच्य तेप्रतिसञ्चर । ॥ इ० ॥

प्राकृतमानुष . । पु० सामान्यमनुष्ये ॥ यथा । एकादशचमूनाथंभीमपादे नमास्पृश । पद्मानामपियोभर्त्ता नासौप्राकृतमानुष : ॥

प्राक्तनमित्तम् । न० खदेशव्यवहितदेशावस्थितेराजनि ॥

प्राक्तनशत्रु । पु० एकविषयाभिनिवेशिनिनृपादौ ॥

प्राकृतिक । पु० बन्धविशेषे ॥ सच-प्रकृतावात्मज्ञानात्०येप्रकृतिमुपासतेतेषाभवति । योवायुपुराणे०प्रकृतिलयादित्युच्यते । पूर्णं शतसहस्रन्तुतिष्ठन्त्यव्यक्तचिन्तकाइति ॥ त्रि०प्रकृतिविकारे । प्रकृतिसम्बन्धिनि ॥

प्राकूल । त्रि० प्रागग्रे ॥

प्राक्तन । त्रि० प्राग्‌भवे ॥ कालवाचिनोऽव्ययात्ट्युट्युलौ ॥

प्राक्तनकर्म । न० अदृष्टे । भाग्ये ॥ पुराकृतकार्ये ॥

प्राक्फल । पु० पनसे ॥

प्राक्फल्गुनी । स्त्री० पूर्वफल्गुन्याम् ॥

प्राक्फल्गुनीभव । प्राक्फाल्गुन । प्राक्फाल्गुनेय । पु० बृहस्पतौ । जीवे । चित्रशिखण्डिजे ॥ तीक्ष्णतायाम् । प्रखरत्वे ॥

प्रागभाव । पु० कार्यस्योत्पत्तेः पूर्व्वं वर्त्तिनि०अभावविशेषे ॥ सच०अनादि . सान्त. । आकाशादावतिव्याप्तिवारणायसान्तइति । घटादावतिव्याप्तिवारणायानादिरितितार्किका ॥ विद्यमानस्यघटस्यमृत्पिण्डेघ्वभाव ' प्रागभाव . आविर्भावजनककृतिसत्कार्य्यवादिन : ॥

प्रागल्भ्यम् । न० प्रगल्भतायाम् । प्रतिभातिशये ॥ यथा । प्रागल्भ्यहीनस्यनरस्यविद्या०शस्त्रं यथाकापुरुषस्यहस्ते । नत्वम्निमुख्यादयतेशरीरेष्वस्यदाराइवदर्शनीया ॥ क्ली० ॥ स्त्रीणामयत्नजेभावविशेषे ॥ य० । प्रागल्भ्यौदार्यमाधुर्य्यशोभाधीरत्वकान्तय । दीप्तिश्चा०यत्नजा०भावहावहेलास्त्रयोङ्गजा ॥ क्ली० ॥ प्रगल्भस्यभाव । ष्यञ् ' प्रागल्भ्यपराभिभवसामर्थ्यमितिगीताभाष्यटीका ॥

प्रागुदीची । स्त्री० पूर्वोत्तरदिशि ॥

प्राग्गमनम् । न० अग्रतोनिस्सरणे ॥

प्राग्ज्योतिष । पु० कामरूपे । नरकासुरपुरे ॥ अत्रैवस्थितोब्रह्माप्राङ्नक्षत्रं ससर्ज ह । तत : प्राक्ज्योतिषाख्येयं पुरीशक्रपुरीसमा ॥

प्राग्भद्रपदा । स्त्री० पूर्वभाद्रपदनक्षत्रे ॥

प्राग्भाग । पु० पर्वतादेरग्रभागे ॥

प्राग्भार । पु० प्राकृतिविशेषे ॥ पर्वताग्रभागे ॥ तटे ॥

प्राग्रहर । त्रि० प्रधाने । श्रेष्ठे ॥ प्रकृष्टमग्रम् । प्राग्रं हरति । हरतेरनुद्यमनेच् ॥

प्राघाटम् । न० अघनेदधनि ॥

प्राग्र्य । त्रि० अग्रे । श्रेष्ठे ॥ प्रकृष्टोग्र्य ॥

प्राग्वंश : । पुं० घृताधारगृहात्पूर्वं गृहे । पत्नीशालाख्ये । हवि र्शालाया पूर्वभागेयजमानादीनाम्स्थित्यर्थेगेहे ॥ प्राग्वति । अव्यु० । ऋत्विगादिनाक्विन् । प्राग्‌०वंश गोचस्थूणावाऽथ ॥ यत्रशालाया पूर्वपश्चिमस्तम्भयोरर्पितेपूर्वपश्चिमायते काष्ठे ॥

प्राघात । पु० युद्धे ॥ प्रकृष्टआघातोयस्मिन् ॥

प्राघार । पु० घृतादिक्षरणे । श्चोतते॥ प्राघरणम् । घृक्षरणदीप्त्यो । घञ् । उपसर्गस्यघञ्योतिदीर्घः ॥

प्राघुण : । ) पुं० अति-

प्राघुणिक । ) पु० थौ ॥

प्राघूर्ण : । पु० ) पु० अति-

प्राघूर्णिक । ) थौ ॥

प्राङ्क । ) पुं० पणव-

प्राङ्ग । ) पुं ०वाद्ये ॥

प्राङ्गणम् । न० अङ्गने । चत्वरे । अजिरे । अगना०आगन०द्व०भा० ॥ सूर्यविद्धस्यतस्यदोषोयथा । अभद्रदंसूर्यवेधप्राङ्गणस्यतथैवचेति ॥ अभिव्यक्तिस्थाने । गृहाद्बहिस्थले ॥ पणववाद्ये ॥ प्रकृष्टमङ्गनम् ॥

प्राङ्न्याय : । पुं० चतुर्वीतरान्तर्गतो व्यवहारविशेषे ॥ यत्राभियुक्तएवब्रूयात् । अस्मिन्नर्थेऽनेनाहमभियुक्तस्तत्राय व्यवहारमार्गेपराजितइति । उक्तञ्चकात्यायनेन । आचारेणावसन्नोपिपुनर्लेखयतेयदि । सोभिधेयोजित : पूर्वंप्राङ्न्यायस्तुसउच्यते ॥ द्व० ॥

प्राक् । अ० पूर्वदिशि॥ पूर्वदेशे ॥ पूर्वकाले ॥ प्राचिदेशे०प्राचोदेशात्०प्राङ्देशोवा । दिक्छब्देभ्य : सप्तमीपञ्चमीप्रथमाभ्योदिग्देशकालेष्वस्तातिरिति०अस्ताति । अञ्चेर्लुक् । एवदिशि०कालेच ॥ इहकस्मान्नभवति०पूर्वस्मिन्देशेवसतीति । नैषदोष । देशविशेषणमेतत् । द्व०भाष्यम् ॥ योहिदेशेनविशेष्यमाणोदेशोभवतितत : प्रत्ययो०नविशेषणादिस्यर्थः ॥ पूर्वस्मिन् ॥ अवान्तरे ॥ अग्रे ॥ प्रभाते॥ अतीते ॥

प्राङ् । त्रि० पूर्वदिशि ॥ पूर्वदेशे ॥ पूर्वकाले ॥ प्रकर्षेणाञ्चति । सुप्युपपदेअञ्चेः ऋत्विगादिनाक्विन् । अनिदितामितिनलोप । उगिदचामितिनुम् । संयोगान्तस्यलोप. । नुमोनस्य०क्विनप्रत्ययस्ये तिकुत्वेनङकार ॥

प्राचिका । स्त्री० दंशे । डांस० द्व० भा० ॥ पक्षिविशेषे ॥ प्राञ्चति । अञ्चु० । क्वुन् । ह्रस्वम् ॥

प्राची । स्त्री० पूर्वस्यादिशि ॥ पूज्य पूजकयोरर्थे ॥ यत्रैवभानुस्तुवियत्युदेतिप्राचीतितावेदविदोवदन्ति । तथा पुर ' पूजकपूज्ययोश्च सदागमश्चा प्रवदन्तितन्त्वे ॥ प्राथम्ये ऽचप्रशब्द . । प्रथममञ्चतिप्राप्नोतिसूर्यम् । अञ्चु० । ऋत्विगादिनाक्विन् । उगितश्चे ङीप् ॥

प्राचीनम् । न० वृतौ । प्राचीरे ॥ त्रि० प्राग्भवे । पूर्वदिग्देशकालभवे ॥ प्राचि ॥ प्रागेव । विभाषाद्वेरदिक् स्त्रियामिति० ख ॥

प्राचीनपनस . । पु० विल्वे । गोष्ठीतक्याम् ॥

प्राचीनयोग्य : । पुं० वेदप्रसिद्धे सत्ययोग्याख्यमुनौ ॥ प्राचीनयोगस्य गोत्रापत्यम् । गर्गादित्वाद्यञ् । बहुत्वे प्राचीनयोगा ॥

प्राचीनवंश . । पु० कर्ममीमांसाप्रसिद्धे । मण्डपविशेषे । यस्य मण्डपविशेषस्योपरिवंशा ' प्रागग्राभवन्ति, सप्राचीनवंश इत्युच्यते ॥

प्राचीनवर्हि : । पु० इन्द्रे ॥ पृथोः प्रपौत्रे० प्रचेतसांपितरि० राजर्षिविशेषे ॥ प्राचीनाग्रा : कुशा स्तस्यपृथिव्यांविस्तृतामुने । प्राचीनवर्हिरभवत् ख्यातो भुविमहाबल . ॥

प्राचीनशाल ' । पुं० वेदप्रसिद्धे मुनिविशेषे । औमन्यवे ॥

प्राचीना । स्त्री० वनतिक्तिकायाम् । पाठायाम् । भावनादि०इ०गौ० भा० ॥ नाकुल्याम् । रास्नायाम् ॥ प्राचिभवा । विभाषाद्वेरिति ख । टाप् ॥ प्राग्भवायाम् ॥

प्राचीनामलकम् । न० वारिबदरे । पानीयामलके ॥ प्राचीनामलकं दोषत्रयजिद्गरघातिच ॥

प्राचीनावीतम । न० अपसव्ये । श्राद्धादौवामकरेदक्षिणस्कन्धार्पितयज्ञसूत्रे । विपरीतधृतयज्ञोपवीते ॥ तथाहि । सव्यं बाहुं समुद्धृत्यदक्षिणे तुधृतं द्विजा । प्राचीनावीतमित्युक्तं पित्र्ये कर्मणियोजयेत् ॥ प्राचीन प्रदक्षिणमावीयते स्म । अज० । अजेर्व्यघञपो ' ॥ वीगत्यादिषुवा । क्त : ॥ यद्वा । प्राचीनं प्रदक्षिणम्ाजतिस्म० आवेतिस्मवा गत्यर्थे तिक्त ' ॥

प्राचीनावीती । पुं० अपसव्यवतिद्विजे ॥ वामपाणावुद्धृतेदक्षिणस्कन्धस्थिते वामकक्षावलम्बे यज्ञसूत्रेवस्त्रे वाप्राचीनावीतीद्विजोभण्यते ॥ प्राचीनावीतमस्यास्ति । अतइनिठनावितीनि ' ॥

प्राचीपति । पुं० इन्द्रे ॥

प्राचीरम्, । न० प्रान्ततोवृतौ । ग्रामादेरन्ते कण्टकादिवेष्टने ॥ दुर्गार्थं नगरादे 'प्रान्तभागेवेणुकण्टकवेत्रादिमयीवृत्तिर्वेष्टनिकेतिकश्चिद्भरतः ॥ सून्मय्यामपिवृतौप्राचीरमुपचारादितिसाम्याद्य ' ॥ प्राचीयते । प्राङ्पूर्वश्चिञ्चयने । श्रुसिचिमीनादीर्घश्चेतिक्रन्दीर्घौ ॥

प्राचेतस, । पुं० प्राचीनबर्हिराजपुत्रेषु ॥ सान्तनित्यबहुवचनान्तो० यम् ॥

प्राचेतस, । पु० वाल्मीकिमुनौ । रामायणप्रवक्तरि ॥ प्रचेतसोऽपत्यम । अण् ॥

प्राच्य ' । पुं० शरावत्यानद्यामर्यादाया, प्राग्दक्षिणदेशे ॥ देशान्तरे ॥ यथा । अङ्गावङ्गामद्गुरकाश्चान्तर्गिरिवर्हिगिरा. । ततः प्रवङ्गामातङ्गामलयामलवर्त्तकाः ॥ सुह्मोत्तरा, प्रविजयाभार्गवाङ्गेयमालवा, । प्राग्ज्योतिषाश्चपुण्ड्राश्चविदेहास्ताम्रलिप्तकाः ॥ साल्वामागधगोनर्दाः प्राच्याजनपदाः स्मृता. ॥ इ० मत्स्यपुराणम ॥ त्रि० पूर्वदेशीये ॥ प्राच्याभव, । द्युप्रागितियत ॥

प्राट् । पुं० प्रश्नकर्तरि ॥

प्राजक: । पु० सारथौ । सूते ॥

प्राजनम्, । न० तोदने । वृषभादिप्रेरणदण्डे ॥ प्रवीयते नेन । अज० । ल्युट् । वायाविति वीन ॥

प्राजापत्य: । पुं० प्रयागे ॥ जैनराजभेदे । त्रिपृष्ठे ॥ प्रजापतेरपत्ये । देवे ॥ असुरे ॥ विवाहविशेषे । कार्थे ॥ सहोभौचरतांधर्ममितिवाचानुभाष्यच । कन्याप्रदानमभ्यर्च्य प्राजापत्योविधिः स्मृतः ॥ पञ्चमवत्सरे ॥ नीरोगाश्चनिराबाधामानवाविगतद्विषः । बहुक्षीरास्तथा, गाव प्राजापत्ये वरानने ॥ ५ ॥ देवसर्गान्तरे ॥ प्रजापतेरपत्यम्०प्रजार तिर्देवताऽस्य०प्रजापतेरिवायवित्यार्थे०दित्यदित्यादित्यपत्युत्तरपदाण्ण्य. ॥ न० तपसि ॥ पु० न० द्वादशाहसाध्ये व्रतविशेषे ॥ यथा० त्र्यहप्रातस्त्र्यहसायंत्र्यहमद्यादयाचितम् । त्र्यहपरञ्चनाश्नीयात्प्राजापत्यचरन्द्विजः ॥ अथग्रासपरिमाणामिचायामाहपराशर । सायद्वाविंशतिर्ग्रासा, प्रात, षड्विंशतिस्तथा । अयाचितेचतुर्विंश परचानशनस्मृतम् । कुक्कुटाण्डप्रमाणस्स्याद्यावान्वाप्रविशेन्मुखम् । एतद्ग्रासंविजानीयाच्छुद्ध्यर्थंकायशोधनम् ॥ हविष्यान्नमश्नीयाद्यथारात्रौतथादिवा । त्रींस्त्रीण्यहानिशास्त्रीयान्ग्रासान्सङ्ख्याकृतान्यथा ॥ अयाचित

तथैवाद्यादुपवासस्त्र्यहंभवेदिति ॥ पुं० रोहिणीनक्षत्रे ॥ वि० प्रजापतिसम्बन्धिनि ॥

प्राजापत्या । स्त्री० यजुर्वेदीयोपाख्यानग्रन्थोक्तायाम् । सन्यासश्रमपूर्व कर्तव्यप्रजापतिदेवताकसर्वस्वदक्षिणायामिष्टौ ॥ यथा । प्राजापत्यानिरूप्येष्टिंसर्ववेदसदक्षिणाम् । आत्मन्यग्नीन्समारोप्यब्राह्मण प्रव्रजेद्गृहादिति ॥

प्राजिता । पु० सारथौ । यन्तरि । सूते ॥ प्राजति । अज० । तृच् । अजभावितरणयोर्वा । वलादार्द्धधातुकेविष्यतइतिवीभावेन ॥

प्राज्ञ । पु० कल्किदेवस्यज्येष्ठे भ्रातरि ॥ परमात्मनि ॥ विदितवेद्यतदुपकरणार्थे०विवेकिनि ॥ प्रज्ञाञ्च विनाशिस्वरूपानुभवरूपायस्यसप्रज्ञ । प्रज्ञएवप्राज्ञ. । प्रज्ञादण् ॥ पक्षिविशेषे । राजशुके । शतपत्रे । राजसूषा० इ० भा० ॥ कारणशरीराऽभिमानिनिजीवे । मलिनसत्त्वप्रधानाविद्योपाधिकेजीवे ॥भूतभविष्यतिचविषयेज्ञातृत्वतथासर्वस्मिन्नपि वर्तमानेविषयेज्ञातृत्वमस्यैवेतिप्रकर्षेणजानातीति०प्रज्ञः । सएवप्राज्ञ. ॥ सुषुप्तोपिहिभूतपूर्वगत्याप्राज्ञउच्यते ॥ प्राज्ञेणपक्ष ' वि० पण्डिते ॥ पण्डितेचगुणाःसर्वेमूर्खेदोषाश्चकेवलम् । तस्मान्मूर्खसहस्रेषुप्राज्ञएकोविशिष्यतइतिविष्णुशर्मा ॥ दृचे ॥

प्राज्ञता । स्त्री० विद्वत्त्वे ॥ यथा । पदपदार्थमेकवाक्यार्थेसुभाषितम् । मूर्खोपिप्राज्ञतांयातिनदीभिः सागरोयथा इति ॥

प्राज्ञमानी । त्रि० पण्डिताभिमानिनि ॥

प्राज्ञा । स्त्री० बुद्धिमत्याम् । धीमत्याम् ॥ प्रज्ञाऽस्त्यस्या । प्रज्ञाश्रद्धार्चाभ्योण । टाप् ॥

प्राज्ञी । स्त्री० सूर्यपत्न्याम् । प्राज्ञायाम् ॥ प्रजानाति । ज्ञा०आतश्चोपसर्गेइतिक ॥ प्र० अण् ॥

प्राज्यः । त्रि० प्रचुरे । प्रभूते । अदभ्रे ॥ प्रवीयते । अज० ण्यत् । वा०वीभावेन ॥ आज्यसम्पन्ने ॥ प्रभूतमाज्य यस्य स ॥

प्राञ्जल । त्रि० सरले ॥

प्राञ्जलि । त्रि० बद्धाञ्जलौ । कृतसम्पुटकरयुगले ॥ भक्तिनम्रे ॥ प्रकृष्टोमुक्तिकृतोऽञ्जलिर्येन०यस्य वा । प्रवद्ध अञ्जलिर्येनवा ॥

प्राड्विवाक । पुं० अक्षदर्शके । विचारार्थेराजनियुक्तपुरुषे । व्यवहारद्रष्टरि । ऋणदानादीन्यष्टादशविवादपदानिव्यवहाराः तेषांनिर्णेतरि । जज० इति अङ्गरेजीभाषा ॥ प्रच्छनं । प्रच्छनीपायाम् । क्विब्वचिप्रच्छि

श्रिस्तृद्रुकटप्रुज्वादीर्घौऽसम्प्रसार णश्चे त्युणादिसूत्रेणक्विब्दीर्घौ० सम्प्र सारणाभावश्च । विवचनम् । घञ् । प्राट्चविवाकश्चप्राड्विवाकौ० प्रश्न विवेकावस्यस्त । अर्थआदच् । प्रश्नविचारयो कुशलइत्यर्थं. ॥ यद्वा । पृच्छतिवादिप्रातिवादिवा क्यम्प्राट् । च्छ्वो . शूडनुनासिकेचे ति० शादेश । विविच्यवक्तीतिवि वाक . । घञ् । प्राट्चासौविवा कश्चेति० प्राड्विवाक ॥ यथा- हु । विवादानुगतपृष्ट्वापूर्ववा क्य प्रयत्नत . । विचारयतियेना सौप्राड्विवाकस्तत ' स्मृत ' इति ॥ अपिच । अर्थिप्रत्यर्थिनौपृच्छती तिप्राट् । तयोर्वचनविरुद्धाविरुद्ध स्सभ्ये सहविविनक्तिविवेचयति वेतिविवाक . । प्राट्चासौविवाक श्चेतिप्राट्विवाक ॥ उक्तञ्च । विवा दानुमतपृष्ट्वा ससभ्यस्तत्प्रयत्नत : । विचारयतियेनासौप्राड्विवाकस्त त स्मृत . ॥ इति ॥

प्राण । पु० प्राणगमनवति० नासाग्र स्थानवर्तिनिवायौ । नासाग्रेप्रत्य क्षमुपलभ्यमानत्वात् । प्रागनिती तिव्युत्पत्तेश्च ॥ . तस्यकर्मबहिर्गम नम् । तस्यरूपम् ० इन्द्रनीलप्रतीका शंप्राणरूपंप्रकीर्तितम् । तस्यस्थाना नि० आस्यनासिकयोर्मध्येवर्ततेनाभि मध्यगे । प्राणालयइतिप्राहु पादा ङ्गुष्ठेपिकेचनेतियोगार्णव ॥ शरी- रान्त सञ्चारिणिवायौ ॥ सचैको प्यु पाधिभेदात्प्राणापानादिकास- ज्ञालभते ॥ इन्द्रियेषु ॥ प्राज्ञे० वी आत्मनि ॥ समष्टिलिङ्गशरीराभिमा निनिचैतन्ये० क्रियाशक्तिप्रधाने० हिरण्यगर्भे ॥ इसरथे । ब्रह्मणि ॥ इन्माइते ॥ बोले । गन्धरसे ॥ का व्यजीवे ॥ बले ॥ धातु : पुंसे ॥ प्रा णितिअनेनवा । अच् ० घञ्वा । अनितेरितिणत्वम् ॥ प्रसरणेन ० च नितिवा ॥ यस्मिन्सतिजीवनम् ० यदपगमेचनभवति० सचवायुविशे षोलोकेरूढ ' प्राणइति ॥ निश्वासो च्छ्वासकासैस्तुप्राणोजीवसमाश्रित . । प्रयाणकुरुतेयस्मात् तस्मात्प्राण प्रकीर्तित : ॥ त्रि० पूरिते ॥

प्राणा । पुं० भूम्नि० असुषु ॥ अस व : प्राणाइति० असुप्राणशब्दाभ्या बहुवचनान्ताभ्यापञ्चप्राणादयउच्य न्ते पुनरेकैकाभिधानेबहुवचनम् । अतएव० प्राणोऽपानइत्युक्तम्० इदि प्राणोगुदेपानइत्यादिचवक्ष्यते ॥ अ स्योत्पत्तिर्यथा । मिलितैस्तैस्तुप्राणो भवतिपञ्चधेति । मिलितै : पञ्चभू तानारजोंशै : प्राणापानादिपञ्च वृत्त्यात्मक . प्राणोभवतीत्यर्थ : ॥ शरीरस्थपञ्चप्राणायथा । प्राणोपान.

समानश्चोदानव्यानौचवायव । श रीरस्थाइमे०इत्यमर । इमेप्राणा दयपञ्चवायव शरीरेतिष्ठन्तितेचनि यतस्थानस्थाः । यदाहु । हृदिप्राणो गुदेपान समानोनाभिसंस्थित . । उदान कण्ठदेशेचव्यान सर्व- शरीरगइति ॥ तेषांव्यापाराश्च- यथा । अन्नप्रवेशन०मूत्रादुत्सर्गो ऽन्नविपाचनम् । भाषणादि०निमे षादि०तद्व्यापारा क्रमादमी ॥ इति ॥

प्राणक : । पु० सत्त्वजातीये । प्राणि मात्रे ॥ जीवकद्रुमे ॥ चोले । व- स्त्रविशेषे ॥ बोले ॥

प्राणथ । पुं० वायौ ॥ तीर्थे ॥ प्रजा पतौ ॥ बलवति ॥ प्राणिति , अन० । शीङ्शपिरुगमिवञ्चिजीविप्राणि भ्योऽथ ॥

प्राणद . । पु० जीवकद्रुमे ॥ भगवति ॥ न० जले ॥ रक्ते ॥ प्राणान्ददा ति०चेष्टयति । प्राणान्कालात्मना द्यति०खण्डयतिवा । प्राणान्दापय ति०शोधयतिवा । प्राणान्दातिलु- नातिवा । आतइतिक . ॥

प्राणदा । स्त्री० हरीतक्याम् ॥ ऋद्धि- वृद्धे ॥ टाप् ॥

प्राणधारणा । स्त्री० असूनाधृत्यर्थंमा हारे ॥ यथा । अथ प्रदायभूतेभ्य . सीताथवरवर्णिनी । तयोरप्यददा दुग्धाजोमधुमासञ्चसम्भृतम् ॥ तयो स्तृप्तिमयोत्पाद्यवीरयो कृतशौच यो । विविधञ्ज्ञानकीपश्चाच्चक्रे साप्राणधारणामित्यार्षेरामायणे० अयोध्याकाण्डेदृष्टम् ॥

प्राणनम् । न० जीवने ॥ पु० गले ॥ त्रि० आप्यायनकरे ॥

प्राणनाथ । पु० पत्यौ ॥ यमे ॥ त्रि० प्राणाधिपे ॥ प्राणानानाथ ॥

प्राणन्त । पुं० रसाञ्जने ॥ वायौ ॥ प्राणयात् । अन० । रुहिनन्दिजीवि प्राणिभ्य . षिदाशिषीतिझच् ॥

प्राणन्ती । स्त्री० हिक्कायाम् ॥ क्षुति । छिक्कायाम् ॥ षित्त्वान्ङीष् ॥

प्राणपण । पु० अतिप्रयासे ॥ प्राणा पणोयस्मिन् ॥

प्राणप्रतिष्ठा । स्त्री० प्रतिमायांजीवन्या से ॥ प्राणानांप्रतिष्ठा ॥

प्राणप्रद : । त्रि० प्राणदातरि ॥

प्राणप्रदा । स्त्री० ऋद्धिनामकौषधौ ॥ प्राणप्रददाति । डुदाञ्० । क ॥

प्राणभास्वान् । पुं० अब्धौ । समुद्रे ॥

प्राणभृत् । पुं० जीवे ॥ प्राणान्बिभ र्ति । डुभृञ्० । क्विप । तुक् ॥

प्राणमय . । पु० द्वितीयकोषे । कर्मे न्द्रियै : सहितैप्राणादिपञ्चकै : क्रि याशक्तिमतिकार्यरूपे ॥ अस्यक्रिया त्मकत्वे नरजोंशकार्यत्वम् ॥ स्थूल- समष्टिकारणीभूतेऽपञ्चीकृतपंचमहा

भूततत्कार्यात्मकोहिरण्यगर्भेसूत्रेऽ-मूर्तिरणोसूक्ष्मसमष्टौ ॥ पूर्यादिवृत्तिबलयच्छन्नप्राणायाय . प्रवर्तक । वायु . प्राणमयोनासावात्माचैतन्यवर्जनात् ॥

प्राणरोध: । पुं० नरकान्तरे ॥

प्राणलय: । पुं० मरणे ॥ परमात्मनि । प्राणानांलये ॥ प्राणलयेजाते०सङ्कल्पविकल्पावपिमनसोनाशासीनलीनौभवतएव० प्राणमनसोर्दुग्धाम्बुवन्मिलितत्वात् । तदुक्तम् । दुग्धाम्बुवत्सम्मिलितावुभौतौतुल्यक्रियौमानसमारुतौतौ । तत्रैकनाशाद्परस्यनाशस्तत्रैकवृत्त्यपरप्रवृत्तिरिति ॥ प्राणलयेसङ्कल्पविकल्पलयेचसमाधिर्भवति ॥

प्राणवान् । पु० जीवे ॥ प्राणोऽस्यास्मिन्वा । मतुप् ॥

प्राणवित् । पुं० हैरण्यगर्भादिषु ॥

प्राणसंयम: । पुं० प्राणायामे ॥

प्राणसमा । स्त्री० पत्न्याम् ॥

प्राणस्पन्दनिरोध: । पुं० चित्तशान्त्युपाये ॥ यस्तुवासनानामतिप्राबल्यात्०तास्त्यक्तुंनशक्नोति०तस्यप्राणस्पन्दनिरोधएवोपाय: । प्राणस्पन्दवासनयोश्चित्तप्रेरकत्वात्०तयोर्निरोधेचित्तस्यशान्तिरुपपद्यते ।

प्राणहार: । पुं० ) वत्सनाभे ॥ त्रि०

प्राणहारकम् । न० ) असुनाशके ॥

प्राणा । स्त्री० विहगी विशेषे ॥ साचाकृष्णगरुडयो: श्वश्रू ॥

प्राणाचार्य्य: । पु० वैद्ये ॥

प्राणात्यय: । पुं० आपत्काले ॥ प्राणानामत्ययोयस्मिन्स ॥

प्राणादिपञ्चकम् । न० प्राणापानव्यानोदानसमानात्मके ॥

प्राणाधिनाथ: । पु० पत्यौ ॥ प्राणानामधिनाथ: ॥

प्राणाधिप: । पुं० प्रिये । पत्यौ ॥

प्राणान्त: । पुं० प्राणावसाने ॥

प्राणापानौ । पुं० अश्विनीकुमारयो: ॥

प्राणायाम: । पुं० प्राणसंयमे । रेचकपूरककुम्भकलक्षणेप्राणनिग्रहोपाये ॥ तथाचयोगसूत्रम् । तस्मिन्सतिश्वासप्रश्वासयोर्गतिविच्छेदलक्षण: प्राणायामइति । तस्मिन्नासनस्थैर्येसतीत्यर्थ: ॥ प्राण: प्रागुदितोवायुरायामोस्यप्रखेदनम् । प्रेरणाक्षिप्तरोधलक्षण: क्रतुदोषनुत् ॥ यवीयान्मध्यमोज्येष्ठ: सतालैर्द्वादशादिभि: ॥ उक्तञ्च । तालद्वादशकोह्रस्व: प्राणायामस्तुकन्यस: । मध्यश्चतुर्भिर्विंशत्याश्रेष्ठस्तद्द्विगुणोभवेत् ॥ सोपिध्यानतपोपेत: सगर्भोऽन्यस्तदुज्झित: । यथासगर्भ:स्थैर्यायमनसोनतथेतर: ॥ अपिच । सव्याहृतिसप्रणवांगायत्रीं शिरसासह । त्रि: पठेदायतप्राण:प्राणा

याम स उच्यते ॥ सर्वपापहरं प्रोक्तं प्राणायामं द्विजन्मनाम् । ततस्त्वभ्यधिकं नास्ति तपः परमपावनम् ॥ अत्र विशेषो देवीगीतायाम् । इडयाकर्षयेद्वायुं वाह्यं षोडशमात्रया । धारयेत्पूरितं योगी चतुःषष्ट्यातु-मात्रया ॥ सुषुम्णामध्यगं सम्यक् द्वात्रिंशन्मात्रया शनैः । नाड्या पिङ्गलया चैव रेचयेद्योगवित्तमः ॥ प्राणायाममिमं प्राहुर्योगशास्त्रविशारदाः । भूयो भूयः क्रमात्तस्य वाह्यमेवं समाचरेत् ॥ मात्रावृद्धिक्रमेणैव सम्यक् द्वादशषोडश । जपध्यानादिभिः सार्द्धं सगर्भं तं विदुर्बुधाः ॥ तदपेतं विगर्भं च प्राणायामं परे विदुः । क्रमादभ्यसतः पुंसो देहे स्वेदोद्गमोऽधमः ॥ मध्यमः कम्पसंयुक्तो भूमित्यागः परो मतः । उत्तमस्य गुणावाप्तिर्यावच्छीलनमिष्यते इति ॥ अध्यात्मविदस्त्वाहुः । चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् । निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥ इति ॥ प्राणस्य वायुविशेषस्य आयामो रोधः ॥

प्राणायामयज्ञः । पुं० अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे । प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ अपरे नियताहाराः प्राणान्प्राणेषु जुह्वतीति भगवदुक्तेः ॥

प्राणिद्यूतम् । न० समाह्वये । पक्षपूर्वाजादिप्राणिसयुगे ॥ प्राणिभिर्मेषकुक्कुटादिभिः कृतद्यूतं ॥

प्राणी । पुं० प्राणविशिष्टे मनुष्यादौ ॥ चेतने । जन्मनि । जन्तौ । शरीरिणि ॥ अथ वैनाशिकमते० अस्य गुणा यथा । बुद्ध्यादिषट्कसङ्ख्यादिपञ्चक भावना तथा । धर्माधर्मौ गुणा एते आत्मनः स्युश्चतुर्दशेति ॥ अयमिन्द्रियाद्याधिष्ठाता० पुण्यपापाश्रयः । ज्ञानसुखादियोगतो मानसप्रत्यक्षविषयः । परदेहादौ प्रवृत्त्यादिनानुमेयः । अहमित्याकारप्रत्ययाश्रयः । मनोमात्रस्य गोचरः । विभुः परममहत्त्ववान् ॥ इति भाषापरिच्छेदः ॥ प्राणाः सन्त्यस्य । अतइनिठनाविति० इनि ॥

प्राणिमाता । स्त्री० गर्भदात्रीक्षुपे ॥

प्राणिहित . । त्रि० लोकहितकारिणि ॥

प्राणिहिता । स्त्री० पादुकायाम् । प्रनद्धिया० इ०भा० ॥

प्राणीत्यम् । न० ऋणे ॥

प्राणेश । पु० पत्यौ ॥

प्राणेशा । स्त्री० भार्यायाम् ॥

प्राण्यङ्गोद्भव । पु० गन्धविशेषे ॥ यथा । मृगनाभिसमुद्भूतस्तत्कोषोद्भव एव वा । गन्धः प्राण्यङ्गजः प्रोक्तो मोददः स्वर्गवासिनामिति ॥

प्रात : सवनम् । न० गायत्रच्छन्दस्के प्रात : कालोपलक्षितेकर्म्मणि ॥

प्रात : । अ० प्रगे । प्रभाते । पञ्चधाविभक्तस्यदिनस्यप्रथमेभागे ॥ प्राति । अत० । प्राततेररन्निति०–अरन्प्रत्यय : ॥ सार्द्धप्रहरे ॥ यथाह्माग्य्यँ . । ललाटसम्मितेभानौप्रथम : प्रहर . स्मृत : । सएवा ध्यर्द्ध संयुक्त : प्रातरित्यभिधीयत इति ॥ पञ्चपञ्चउष : कालः सप्त पञ्चारुणोदय : । अष्टपञ्च०भवेत् प्रात . शेष : सूर्योदय : स्मृत इतिदेवीभागवतम् ॥ श्रोत्रियशुभगांगाश्चवन्निमग्निचित तथा । प्रात रुत्थायय : पश्येदापद्भ्य : सविमुच्यते ॥ तथा ॥ पापिष्ठ दुर्भगांमद्यं नग्नमुत्कृत्तनासिकम् । प्रात रुत्थायय : पश्ये तत्तत्कलेरुपलक्षणमितिच्छन्दोगपरिशिष्टम् ॥

प्रातरनुवाक : । पुं० मन्त्रे ॥ यत्प्रात : कालेशस्यतेयाज्ञिकै : ॥

प्रातराश : । पु० प्रात : कालीनभोजने । कल्पावर्त्ते । कलेउ०इ०–भा० ॥

प्रातर्गेय : । पुं० स्तुतिपाठके । स्तुतिव्रते । वन्दिनि । भाट०इ०भा० ॥ प्रात : कालेगेयईश्वरादिर्येन ॥ अहर्मुखेगातव्ये गीतानामसदृक्षादौ ॥

प्रातर्भोक्ता । पु० काके ॥ प्रात भुङ्क्ते । भुज०तृच् ॥ त्रि०प्रभातेभोजनकर्त्तरि ॥

प्रातर्भोजनम् । न० कल्पावर्त्ते ॥

प्राति : । स्त्री० पूर्त्तौ ॥ प्रादेशे ॥

प्रातिका । स्त्री० जवायाम् ॥

प्रातिकूलिक : । त्रि० प्रतिकूलचारिणि । प्रतिकूले ॥ प्रतिकूल वर्त्तते । तत्प्रत्यनुपूर्वमीपलोमकूलमितिठक् ॥

प्रातिजनीन . । त्रि० जनेजनेसाधौ ॥ जनञ्जनम्०इति० प्रतिजनम् । वीप्सायामव्ययीभाव : । प्रतिजने साधु : । प्रतिजनादिभ्य : खञ् ॥

प्रातिपथिक . । त्रि० प्रतिपथिके ॥ प्रतिपथमेति । प्रतिपथिमेतिठश्चेतिपत्रेठक् ॥

प्रातिपदिक . । पुं० अग्नौ । शिखावति ॥ न० । अर्थवद्धातुरप्रत्यय प्रातिपदिकम्०कृत्तद्धितसमासाश्चेति सूत्राभ्यालक्षिते० नामनि ॥ प्रतिपदिभवम् । ठक् ॥ घोर . कीदृग्वचोन्नूतैकोरोगोकश्चनास्तिक : । कीदृक्चन्द्रनपश्यन्तिततसूत्रपाणिनेर्वद ॥

प्रातिभम् । न० प्रतिभाविशेषे ॥ ज्ञानप्रभावविशेषे ॥ प्रतिभैव०प्रतिभाया भववा । स्वार्थे०भवार्थेवा अण् ॥

प्रातिभाव्यम् । न० प्रतिभूत्वेनदेयेधने ॥

प्रतिभुवोभावे । जामिनी० इ० भा० ॥ यथा। साक्षित्वप्रातिभाव्यञ्च दानग्रहणमेवच । विभक्ताभ्रातर: कुर्युर्नाविभक्ता : परस्परम् ॥ इ० ॥

प्रातिभासिक ' । त्रि० प्रतिभासमात्रकालसिद्धे । नपुरस्तान्नपश्चात्स्थिते ॥ यथाशुक्तिकायारूप्यं रज्जौवासर्पं ॥

प्रातिलोमिक : । त्रि० प्रतिकूले ॥ प्रतिलोमवर्तते । तत्प्रत्यनुपूर्वमीपलोमकूलमितिठक् ॥

प्रातिवेश्य ' । पुं० निरन्तरगृहवासिनि । परौसी० इतिभा० ॥ प्रतिवेशभव । यत् ॥

प्रातिशाख्यम् । न० वेदभाष्ये ॥ प्रतिशाखभवम् । अव्ययीभावाच्चेतिञ' ॥

प्रातिष्ठितम् । न० आवेशिकेखीये ॥

प्रातिस्विक । त्रि० असाधारणे । आवेशिके । खीये ॥

प्रातिहारिक । पुं० मायाकारे । ऐन्द्रजालिके ॥ प्रतिहरणम् । हञ्० । भावेघञ् । प्रतिहारोव्याज . प्रयोजनमस्य । प्रयोजनमितिठक् ॥

प्रातीप । पुं० प्रतीपपुत्रे । महाभीष्मे । शान्तनुराजे ॥

प्रातीपिक : । त्रि० प्रतिकूलेप्रतीपं वर्तते । तत्प्रत्यनुपूर्वमीपलोमकूलमितिठक् ॥

प्राथमकल्पिक : । पुं० शैक्षे । प्रथमारब्धवेदे ॥ प्रथमकल्पआद्यारम्भ : प्रयोजनंयस्य । प्रयोजनमितिठञ् ॥ यद्वा । प्रथमकल्पमधीते । विद्यालक्षणकल्पान्ताच्चेतिवक्तव्यमितिठक् ॥

प्राथमिक : । त्रि० प्रथमभवे ॥ प्रथमस्यव्याख्यान: प्रथमेभवोवाद्व्यजृद्ब्राह्मणक् प्रथमाध्वरपुरश्चरणनामाख्याताट्टक् ॥

प्राथम्यम् । त्रि० प्रथमस्यभावे ॥

प्रादुर्भाव: । पुं० प्राकट्ये . आविर्भावे ॥

प्रादुष्कृत : । त्रि० प्रकटिते ॥

प्रादु ' । अ० नामनि ॥ विष्णोर्दंशप्रादुर्भावा ' । दशनामानीत्यर्थ : ॥ प्रकाशे ॥ प्राकाश्ये । स्फुटतायाम् । चाविरर्थे । सम्भाव्ये ॥ इत्ती प्रान्दति । अदिवक्षमे । वा० उस् । आगमशास्त्रस्यानित्यत्वान्ननुम् । प्रात्तिवा । अदभक्षणे ॥

प्रादेश: । पु० तर्जन्यङ्गुष्ठसम्मिते । तर्जनीसहितविस्तृताङ्गुष्ठे ॥ प्रदिश्यते । दिश० । हलश्चेतिघञ् । उपसर्गस्यघञीतिपाक्षिकोदीर्घ ।'

प्रादेशनम् । न० दाने ॥ दिशअतिसर्जने । प्राङ्पूर्व : । भावेल्युट् ॥

प्रादेशिक । पुं० अव्याप्यवृत्तौ ॥

प्रादोष : त्रि० } प्रदोषसम्बिनि ॥ निशाप्रदोषा
प्रादोषिक : त्रि० }

भ्यास्त्रेतिशेषिकेर्थेठञ् । पक्षेऽण् ।

प्राद्युम्नि . । पुं० अनिरुद्धे ॥

प्राधान्यम् । न० प्रधानतायाम् ॥ अ गुणीभावे ॥ भावेष्यञ् ॥
प्राधीत । त्रि० प्रक्रान्ताध्ययने ॥
प्राध्ययनम् । न० प्रकृष्टाध्ययने ॥
प्राध्वम् । त्रि० दूरपथे ॥ प्रह्वे । प्रणते ॥ बन्धने ॥ प्राध्वनति । ध्वनशब्दे । डम्प्रत्यय ॥
प्राध्वंकृत्य । अ० बन्धनेनानुकूलकृत्वेत्यर्थे ॥ प्राध्वम्बन्धने॰ इतिगतिसञ्ज्ञा । कुगतीतिसमास ।
प्राध्वम् । अ० नम्रत्वे ॥ अनुकूले ॥ प्राध्वनति । ध्वन॰ डम् ॥
प्रान्त । पु० चरमे । अन्तभागे । शेष सीमायाम् । उपान्ते । यथा । प्रान्तच्छायाविनिर्मुक्तानमनोज्ञाजलाश्रयाः । तस्माद्धोजलप्रान्तच्छायारामानृपनिविशयेदिति ॥
प्रान्तत । अ० प्रान्तभागे ॥
प्रान्तरम् । न० ग्रामस्यदूरे॰ छायाजलादिशून्ये वर्त्मनि । दूरशून्यपथे ॥ विपिने । अरण्ये ॥ कोटरे ॥ प्रकृष्टमन्तरम्॰ व्यवधानमवकाशोवायत्र । प्रादिभ्यइतिबहुव्रीहि ॥
प्रान्तरशून्यम् । न० छायादिरहिते॰ दूरशून्येऽध्वनि ॥
प्रान्त्य । त्रि० प्रान्तभवे ॥
प्रापणम् । न० नयने । प्राप्तौ ॥ प्रकर्षेणाव्यापने ॥

प्रापणिक । पु० पण्यविक्रयिणि । प्रापणाभ्यते । मनु० । आपणिक वाणइतिकिकन् ॥ प्रपणोव्यवहार प्रयोजनमस्यवा । तदस्यप्रयोजनमितिठञ् ॥
प्रापणीय । त्रि० फलमात्रे ॥ प्राप्ये ॥ प्राप्यतेयत् । प्रपूर्वापधातोः कर्मण्यनीयर् ॥
प्रापय्य । अ० गमयित्वेत्यर्थे ॥
प्रापित । त्रि० निवेशिते ॥ नीते प्रकर्षेणआपिते ।
प्रापिपयिषु । त्रि० प्रापयितुमिच्छौ ॥ प्रापयते : सन्नन्तादुप्रत्यय ॥
प्रापेय । पु० गन्धर्वगणविशेषे । यथा प्रवाच्यजनयत पुत्रान्दिव्यान् वैगाधनोत्सुकान् । चतुर्दश देवगन्धर्वाः प्रापेया परिकीर्तिताः ॥
प्राप्त । त्रि० स्थापिते । प्रणिहिते ॥ विन्ने । लब्धे ॥ यथा । प्राप्तेकर्मणिनाऽनेकोविधातुंशक्यतेगुण । अप्राप्तेतुविधीयन्तेबहवोप्येकयत्नतइतिन्याय ॥ समञ्जसे ॥ प्राप्यतेस्म ॥ आप्ल॰ । गत्यर्थाकर्मकेतिक्त ॥ कर्तरिक्त इति स्वामी ॥
प्राप्तपञ्चत्वम् । त्रि० मृते ॥ प्राप्तपञ्चत्वमनेन ॥
प्राप्तपात । पु० चण्डांशोः पारिपा

श्रिवं॑की ॥
प्राप्तभाव । पुं॰ जातोच्चे ॥ त्रि॰ लब्धसत्तादौ ॥ मनोहरे ॥ पण्डिते ॥
प्राप्तरूप । त्रि॰ प्राज्ञे ॥ रम्ये ॥ प्राप्तोरूपम । प्राप्तापन्ने चद्वितीय येतिसमासः । प्राप्त रूप येन वा ॥
प्राप्तव्य । त्रि॰ प्राप्ये ॥ प्राप्यते यत् । प्रपूर्वापधातो ' कर्म्मणित व्यप्रत्यय ॥
प्राप्ति । स्त्री॰ महोदये । धनादि वृद्धौ ॥ अधिगमे । लाभे ॥ भूत्यन्तरे । अणिमाद्यष्टैश्वर्यान्तर्गते श्वर्यविशेषे ॥ यतोऽङ्गुल्यग्रे णास्पृशतिचन्द्रमसम् ॥ प्राप्णम् आपलृ॰ । स्त्रियांक्तिन् ॥ लभ्नादेकादशी ॥
प्राप्त । त्रि॰ प्राप्तवति ॥ प्राप्नोति । टच् ॥
प्राप्य । त्रि॰ गम्ये । समासाद्ये । प्राप्तव्ये । आसुशक्ये ॥ प्राप्यते । आपलृ॰ । ऋहलोर्ण्यत् ॥
प्राबोधिक । पुं॰ उष ' काले ॥ प्राबोधकोपिपाठ , शब्दमालायाम् ॥
प्राभञ्जनम् । न॰ स्वातिनक्षत्रे ॥ त्रि॰ प्रभञ्जनसम्बन्धिनि ॥
प्राभवम् । न॰ श्रेष्ठत्वे ॥

प्राभवत्यम् । न॰ प्रभवतोभावे ॥ ष्यञ् ॥
प्राभाकर । पुं॰ आत्मनोचित्प्रभा दिनि॰ मीमांसकविशेषे ॥ प्राभाकरास्तार्किकाश्चाहुरस्यापि दात्मताम् । भाकाशवद्व्यसात्माय द्रव्यतद्गुणमिति ॥
प्राभूतिक । त्रि॰ प्रभूतवादिनि ॥ प्रभूतमाह । वाहीप्रभूतादिभ्यष्ठगितिठक् ॥
प्राभृतम् । न॰ उपढौकने । प्रदेशने । देवताभ्योमित्रादिभ्यश्चदीयमाने । भेट॰ इ॰ भा॰ ॥ प्राभ्रियते स्म । भृञ् भरणे॰ डुभृञ् धारणपोषणयो र्वा । क्त ॥
प्राभृतकम् । न॰ कौशलिकायाम् । प्राभृते ॥
प्रामाणिक । त्रि॰ प्रमाणलब्धे ॥ प्रमाणादागतः । ठक् ॥
प्रामाण्यम् । न॰ प्रमाणत्वे ॥ काल त्रयाबाधितार्थविषयत्वम् प्रामाण्य मितिव्याख्यातार ' ॥ संवादाभ्यां न प्रामाण्यमितितार्किकाः ॥ स्वतः प्रामाण्य मितिमीमांसकाः ॥ प्रमाणस्यभाव ' ष्यञ् ॥
प्रामाण्यवाद । पुं ॰ प्रमाणत्वता कथने ॥ तद्वतितत्प्रकारकत्वरूप प्रमात्वकथने । मिथ्या मणिन्याय ग्रन्थविशेषे ॥

प्रामादिकम् । त्रि॰ प्रमादादवगते ॥

प्रामाद्य । पुं॰ वासके । चटरूषे ॥

प्रामीत्यम् । न॰ ऋणे ॥ मृतत्वे ॥

प्राय । पुं॰ सन्न्यासवति॰मरणायान
शने ॥ प्रायोपविष्ट गङ्गायामिति
लक्ष्यम् ॥ बाहुल्ये ॥ यथा । प्राये
णाकृतकृत्यत्वान्मृत्योरुद्विजतेजन
। इति ॥ मृत्यौ । मरणे ॥ तुल्ये ॥
वयसि ॥ प्रायणम् । अय॰ । घञ् ॥
प्रकृष्टमयनम् । इण॰ । एरज्वा ।

प्रायत्यम् । न॰ पवित्रतायाम् ॥ प्रयत
स्वभावः । ष्यञ् ॥

प्रायश्चित्तम् । न॰ शुद्धिसम्पादककर्म
विशेषे । अशुद्धत्वनिरसनेनशुद्धेरा
पादके॰पापक्षयसाधनेकर्मणि ॥
प्रायः पापंविनिर्दिष्टंचित्तंतस्यवि
शोधनमितिस्मृतेर्व्युत्पत्तिः ॥ अ-
पिचाङ्गिराः । प्रायोनामतपः
प्रोक्तंचित्तंनिश्चयउच्यते । तपोनि-
श्चयसंयुक्तंप्रायश्चित्तमितिस्मृतम् ॥
निश्चयसंयुक्तंपापक्षयसाधनत्वेननि
श्चितमित्यर्थः ॥ प्रायस्यचित्तम् । पार
स्करादित्वात्साधु ॥ प्रायश्चित्तक-
र्माणितु॰पापक्षयसाधनानिचान्द्रा
यणादीनि । विहिताऽकरणप्रतिषि
द्धसेवारूपनिमित्तविशेषानुबन्धीनि॰
प्रायश्चित्तकर्माणि । पापक्षयमात्रोद्दे
शेनविहितानीतिवा ॥ पापानामनु
रूपाणिप्रायश्चित्तानिकृत्वा । यथा

तथैवसस्मृत्यप्रोक्तानिपरमर्षिभिः
॥ पापेगुरूणिगुरूणिस्वल्पान्यल्पे च
तद्विदः । प्रायश्चित्तानिमैत्रेयजगुः
स्वायम्भुवादयः ॥ प्रायश्चित्तान्यशे
षाणितपःकर्मात्मकानिवै । या-
नितेषामशेषाणांकृष्णानुस्मरणंपर
मितिपराशरः ॥ प्रायश्चित्तन्तुपापा
नांश्रीदेवीनामसंस्मृतिरितिभागव
तेव्यासः ॥

प्रायश्चित्तीयः । त्रि॰ प्रायश्चित्तयो
ग्ये । प्रायश्चित्तसाधनत्वेनभवः
। प्रायश्चित्तायपापशोधनायश्रुति
स्मृतिविहितायकर्मणेहितोवा ।
छवाच्छः ॥

प्रायः । अ॰ भूम्नि । बाहुल्यार्थे ॥
प्रायनम् । अय॰ । असुन् ॥

प्रायिकः । त्रि॰ प्रायोभवे ॥

प्रायुद्रेषी । पु॰ घोटके ॥

प्रायोज्यम् । त्रि॰ प्रयोजनार्हे ॥
यथा । प्रायोज्यंनविभज्येत ।
यद्यस्यप्रयोजनार्हंपुस्तकादितन्मू-
ल्यैः सहनविभजनीयम् ॥ इति
दायभागः ॥

प्रायोपविष्टः । त्रि॰ प्रायोपवेशवि
शिष्टे ॥ प्रायेणमृत्युपर्यन्तानशने
न उपविष्ट. ॥ अथादित्यपुराणम्
॥ य॰ । समायुक्तोभवेद्यस्तुपातकै
र्महदादिभिः । दुश्चिकित्स्यैर्महा
रोगैः पीडितोवाभवेत्तु यः ॥

स्वय देहविनाशस्यकालेप्राप्ते महा गति . । आब्रह्मायायस्वर्गादिमहा फलजिगीषया ॥ प्रविशेज्ज्वलनं दीप्तं कुर्यादनशनं तथा । एतेषा मधिकारोस्तिनान्येषांसर्ववस्तुषु॥ नराणामपिनारीणां सर्ववर्णेषुस र्वदा ॥ इति ॥

प्रायोप्रवेश । पु० सन्न्यासपूर्वकाऽ नशनस्थितौ ॥

प्रारब्धम् । न० वर्त्तमानदेहारम्भके कर्म्मणि ॥ कर्म्म जन्मान्तरीय यत् प्रारब्धमितिकीर्त्तितम् । दुर्बल सबलंचेतिप्रारब्ध द्विविधं विदुः ॥ दुर्बलस्यप्रतीकार . सनास्तिसब लस्यतु ॥ अवश्य भाविभावाना प्रतीकारोभवेद्यदि । तदादुःखै र्नलिप्येरन् नलरामयुधिष्ठिरा ॥ आत्मानं सततं जानन्कालं नय महामते । प्रारब्धमखिलं भुञ्जन् नोद्वेगं कर्त्तुमर्हसि ॥ इच्छाप्रार ब्ध परेच्छाप्रारब्धमनिच्छाप्रारब्धमि तिभेदात्तत्त्रिविधं । तत्रस्वेच्छा- कृत भिक्षाटनादि० समाध्यवस्थायां शिष्यादिभिर्दीयमान परेच्छाकृतम् समाध्यवस्थायांव्युत्थानदशायांवा आकाशफलपातवदकस्मादागमा न पाषाणपतन कण्टकवेधादिकमा निच्छाकृत प्रारब्धमितिविवेकः ॥ त्रि० प्रकर्षेणारब्धे ॥

प्रारब्धि । स्त्री० गजबन्धनरज्जौ ॥

प्रारम्भ । पु० प्रकृष्टारम्भे ॥ प्रक- र्षेणारम्भ ॥ प्रारम्भे कर्मणाविप्र पुण्डरीकस्मरेद्धरिम् ॥

प्रारिप्सित । त्रि० प्रकर्षेणआरब्धुमी प्सिते ॥

प्रार्थनम् । न० प्रकर्षेणयाचने । प्रार्थ नायाम् ॥

प्रार्थना । स्त्री० याच्ञायाम् । अर्थना याम् । याचनायाम् ॥ प्रकृष्टाचर्य ना ॥ अभियाते ॥

प्रार्थनीयम् । न० द्वापरयुगे ॥ त्रि० प्रार्थनाविषये ॥

प्रार्थित . । त्रि० याचिते ॥ शत्रुसंरुद्धे ॥ अभिहिते ॥ प्रार्थ्यतेस्म । अर्थया च्ञायाम् । क्त ॥

प्रार्थ्यमान । त्रि० याच्यमाने ॥

प्रालम्ब । पुं० पयोधरे ॥ त्रपुषे ॥ न० कण्ठादृज्वस्पृशुलम्बमानमाल्ये ॥ प्रालम्बते । लविस्रंसने । पचा द्यच् ॥

प्रालम्बिका । स्त्री० हैमविरचितेनाभि लम्बिनिमाल्ये ॥ प्रालम्बते । लवि । ण्वुल् ॥

प्रालेयम् । न० मिहिकायाम् । हि- मे ॥ प्रलीयन्ते पदार्थाअनेनेति०प्रल योहिमाद्रिः । ततआगतम् । अण् । केकयमित्रयुप्रलयानायादेरियङ् तियस्य यादेश: ॥ उद्भवे ॥

प्रालेयांशु ०। पुं० हिमांशौ। चन्द्रे ॥ प्रालेयानि० हिमानि० अंशवोयस्य ॥

प्रालेयाचल ०। पुं० हिमालये। मेनाधवे ॥

प्रावट .। पुं० यवे ॥

प्रावर ०। पुं० प्राचीरे ॥

प्रावरणम्। न० संव्याने। उत्तरीयवस्त्रे ॥

प्रावादुक :। त्रि० शुष्कतर्कजल्पनशीले ॥

प्रावार :। पुं० उत्तरासङ्गे। उपरिवस्त्रे ॥ उत्तरीये ॥ प्रव्रियतेऽनेन। वृञ्०। वृणोतेराच्छादने० इ० घञ्। उपसर्गस्यघञीतिदीर्घ .॥

प्रावारकीट ०। पुं० कीटविशेषे ॥

प्रावृडत्यय :। पु० शरदृतौ ॥

प्रावृत .। त्रि० निवीते। परिहितेवस्त्रे ॥ आव्रियतेस्म। वृञ्०। क्त।

प्रावृति। स्त्री० प्राचीरे ॥ ग्रैवानामसते० स्वाभाविक्यामशुद्धौ। मले। प्रथमपापे ॥ प्रावृणोति०प्रकर्षेणाच्छादयतिआत्मनाइक्क्रिये० इ० प्रावृति ॥

प्रावृट्। स्त्री० वर्षाकाले। श्रावणभाद्रयो ॥ वर्षणम्०हट्। वृषुसेचने। सम्पदादित्वात्क्विप्। प्रकृष्टावृट्च। नहिवृतिवृषिव्यधिरुचिसहितनिषुक्काविति दीर्घ ०॥ प्रवर्षतीतिवा ॥

प्रावृषा। स्त्री० वर्षाकाले। जलार्णवे ॥

प्रावृषायणी। स्त्री० कण्डूरायाम्। शूकशिम्बायाम् ॥ प्रावृषामिति०अयतेवा। कर्त्तरिल्युट्। कृत्यचइतिणत्वम्। ङीप् ॥

प्रावृषिक .। पु० मयूरे ॥ त्रि० प्रावृषिजाते ॥ प्रावृषष्ठप् ॥

प्रावृषिज .। त्रि० प्रावृषिजाते ॥प्रावृट्शरत्कालदिवाञ्जे० इत्यलुक् ॥

प्रावृषेण्य ०। पुं० नीपे। कदम्बवृक्षे ॥ कुटजवृक्षे ॥ धाराकदम्बे ॥ त्रि० प्रावृट्कालभवे ॥ प्रावृट्देवतास्य०प्रावृषिभवोवा। कालेभ्योभववत्० इति० प्रावृषएण्य० ॥ प्राचुर्ये

प्रावृषेण्या। स्त्री० रक्तपुनर्नवायाम् ॥ कपिकच्छ्वाम् ॥ प्रावृषिभवा। प्रावृषएण्य। टाप् ॥

प्रावृष्य :। पुं० कुटजे ॥ धाराकदम्बे ॥ विकङ्कटके ॥ न० ॥ वैदूर्यमणौ ॥

प्राट्। पुं० प्रश्नकर्त्तरि ॥ प्रश्ने ॥ पृच्छति। प्रच्छनंवा। प्रच्छज्ञीप्सायाम्। क्विब्वचिप्रच्छीतिक्विब्दीर्घावसम्प्रसारणञ्च। च्छ्वोःशूडितिश। प्राशौ०प्राश प्राड्भ्यामित्यादि ॥

प्राश ०। पुं० अवलेहे ॥

प्राशस्त्यम्। न० उत्तमत्वे ॥ बलवदनिष्टाननुबन्धित्वे ॥

प्राशितम् । न० पितृयज्ञे । निष्य-
ग्रज्ञे ॥ त्रि० भक्षिते ॥
प्राश्निक । पु० सभ्ये ॥ त्रि० प्रश्नक
र्त्तरि ॥
प्रास । पुं० कुन्तास्त्रे । भाला०इ०
भा० ॥ कौ च०इ०गौ०भा० ॥ प्रा
स्यते । असु० । हलश्चेतिघञ् ।
प्रायोऽस्तवेप्येगल्येवृ०स्तामो ॥
प्रासङ्ग । पु० युगे । वत्सानाम्शिक्षा
र्थंकाष्ठवि० । वत्सानादमनकालेस्क
न्धे यत्काष्ठमासज्यतेतच ॥ प्रस-
ज्यते । प्रकृसङ्गे । घञ् । उपसर्ग
स्येतिदीर्घ ॥
प्रासङ्ग्य । पुं० युगवोढरिवृषे । यु
ग्ये ॥ प्रासङ्गं वहति । तद्वहतिरथ
युगप्रासङ्गमितियत् ॥
प्रासाद । पु० देवमन्दिरे ॥ राजगृ-
हे ॥ प्रसीदन्त्यस्मिन्मनांसि । ह
लश्चेतिघञ् । उपसर्गस्यघञीति-
दीर्घ ॥ आङ्गशः । कृत्वाप्रभूत -
सलिलमारामाणिनिवेश्यच । देव-
तायतनं कुर्याद्यशोधर्माभिवृद्धये ॥
प्रासादकुक्कुटः । पु० पारावते ॥
प्रासिकः । पुं० कौन्तिके ॥ प्रासः
प्रहरणमस्य । प्रहरणमितिठक् ॥
प्रास्त । त्रि० प्रक्षिप्ते ॥ निरस्ते ॥
प्रास्यतेस्म । असु० । क्त ॥
प्रास्तारिक । त्रि० प्रस्तारव्यवहर्त्तरि
॥ प्रस्तारेव्यवहरति । कठिनान्त
प्रस्तारसंस्थानेषुव्यवहरति० इतिठ-
क् ॥
प्रास्थानिकम् । त्रि० प्रस्थानकालोचिते
॥ प्रस्थानेभवम् । कालाट्ठञ् ॥ प्र
स्थानशब्दस्यगुणवृत्त्याकथञ्चित्का-
लेवर्त्तमानत्वात् ॥
प्रास्थिकम् । न० प्रस्थपरिमितव्रीह्या-
दिवापयोग्ये क्षेत्रे ॥ प्रस्थस्यवापः ।
तस्यवापइतिठञ् । त्रि० कटाहादि
पात्रान्तरे ॥ प्रस्थसम्भवति०तस्मि
न्समावेशयति० अवहरति० पच
तिवा । सम्भवत्यवहरतीत्यादिना
ठञ् । टिड्ढेति-ङीपि० प्रास्थि-
कीब्राह्मणी । प्रस्थमुपसंहरति०पच
तिवेत्यर्थः ॥ प्रस्थेनक्रीते ॥ ठञ्
॥ प्रस्थपरिमाणमस्य । प्रास्थिकोरा
शिः । तदस्यपरिमाणमितिठञ् ॥
प्राह । पु० नृत्योपदेशे ॥
प्राह्ण । पु० पूर्वाह्णे ॥ प्रथमस्तदह
स्त्वप्राह्णः । राजाहः सखिभ्यष्ट
च् । अह्नोऽह्नएतेभ्यइत्यह्नादेशः ।
अह्नोदन्तादितिणत्वम् ॥
प्राह्णे । अ० पूर्वाह्णे ॥
प्राह्णेतनः । त्रि० पूर्वाह्णसम्बन्धि-
नि ॥ सायंचिरम्प्राह्णेप्रगेऽव्ययेभ्य
ष्ट्युट्युलौतुट्च ॥
प्रिय । पु०धवे । पत्यौ ॥ वृद्धिनामौ
षधौ ॥ जीवकौषधे ॥ प्रीतिविष
ये । आत्मनि ॥ यथा । प्रियोह्या

त्मैवसर्वेषानात्मनोऽस्त्यपरंप्रियम् । लोकेस्मिन्नात्मसम्बन्धाद्भवन्त्यन्ये प्रिया . शिवे । प्राणबुद्धिमन स्वात्मदाराऽपत्यधनादय । यत्सम्पर्कात्प्रियाचासन्नत . कोन्वपर प्रिय । प्रीणाति । प्रीञ् तर्पणे . इगुपधेतिक । न॰श्रोतुस्तत्काल श्रुतिसुखेवाक्ये । त्रि॰हृद्ये । इष्टे । प्रीतिविषये । सं इष्टाचेपुत्रादौ । प्रीतिकरे । सर्वं प्रिय खलुभव त्यनुरूपचेष्ट । भर्त्ते । प्रीणयति शुश्रूषादिनास्वामिनम् । प्रियोऽप्रियस्त्वकार्यवशाद्भवति । यथा । न हिकस्यप्रिय कोवापियोवाजगत्त्रये । कालेकार्यवशात्सर्वेभवन्त्येवाऽप्रिया प्रिया . ॥

प्रियवद् । पु॰ खेचरे । गधर्वविशेषे । त्रि॰ प्रियवाचि । प्रियं वदति । वदव्यक्तायावाचि । प्रियवशेवद खच् । मुम ॥

प्रियवदा स्त्री॰ खर्वश्यायाम् ॥

प्रियक . । पु॰ पीतसालतरौ । जीवके । असनकुसुमे । विजयसार॰ इ॰ भा॰ । नीपे । धाराकदम्बे । चित्रमृगे । कम्बलप्रकृतीमृगविशेषे । प्रियकोरोमभिर्नृत्तोस इ . . . मसर्पमे रितिवैजय ती । षन्नी । चक्षुरीके । प्रियङ्गौ । कुङ्कुमे । काश्मीरजन्मनि । प्रीणा ति । प्रीञ्॰ । क्वुन्शिल्पिसञ्ज्ञयोरितिक्वुन् । यद्वा । प्रीणाति॰ प्रीयतेवा । इगुपधेतिक । स्वार्थेकन् ॥

प्रियकार । त्रि॰ प्रियङ्करे । प्रियं करोति । डुकृञ्॰ । कर्मण्यण्‌स्यात् ॥

प्रियकृत् । पुं॰ नारायणे । भक्तानां प्रियं करोति । क्विप् । त्रि॰ प्रियकारिणि ॥

प्रियङ्कर । त्रि॰ हितकारिणि । प्रियकारके । प्रियङ्करोति क्षेम प्रियमद्रेषा चे तिषर्च खच् ॥

प्रियङ्करी । स्त्री॰ वृहज्जीवन्त्याम् ॥ श्वेतकण्टकायाम् ॥ अश्वगन्धायाम् ॥

प्रियङ्गु . । स्त्री॰ राजिकायाम् । राजसर्षपे । कणायाम् । पिप्पल्याम् । कङ्गुसस्ये । स्वनामख्यातसुगन्धिवृक्षविशेषे । प्रियके । श्यामायाम् । लतायाम् । फलिन्याम् । प्रियङ्गु शीतलातिक्ता तुवरानिलपित्तहृत् । रक्तातियोगदौर्गन्ध्यस्वेददाहज्वरापहा ॥ गुल्मतृड्विषमोहघ्नीतद्वद्गन्धप्रियङ्गुका । तत्फलं मधुरं रूक्षं कषायं शीतलं गुरु । विबन्धाध्मानबलकृत्सङ्ग्राहिकफपित्तजित् ।। प्रियं गच्छति । मृगय्वादीनिपात

सिद्ध :॥ मित॰ दुर्वा॥ प्रियमङ्गलिका। अग्निगती। ख्यन्तोवा। कुपूर्वत्। ग्रकन्धादि :॥ काट्व्याम्।

प्रियचिकीर्षु। त्रि॰ प्रियङ्कर्तुमिच्छौ॥

प्रियजन. । पुं॰ हृदयलोके॥ प्रौढभावे॥ यथा॥ प्रौढभावानुविस्मोय स्तस्यपि्रयजनोचस॥

प्रियजीव। पु॰ श्योनाकवृक्षे॥

प्रियतम। पुं॰ मयूरशिखावृक्षे॥ आत्मनि॥ यथा। वित्तात्पुत्र प्रिय पुत्रात् पिण्ड पिण्डात् तथेन्द्रियम्। इन्द्रियेभ्य. प्रिय. प्राणाआत्माप्रियतमस्तत॥ त्रि॰ प्रेष्ठे॥ अतिशयेनप्रिये॥

प्रियता। स्त्री॰ हार्दे। प्रेम्णि। स्नेहे॥ प्रीणातीतिप्रिय। तस्य भाव। तल्॥

प्रियतोषण '। पु॰ षोडशबन्धातिरिक्तरतिबन्धविशेषे॥ यथा। नारीपादौस्वहस्तेनधार्य्यं स्वपनोपरि। क्रमनापीडकर. कामीकामयेत्। प्रियतोषण.॥ त्रि॰ प्रियसतुष्टिकारिणि।

प्रियत्वम्। न॰ प्रियतायाम्॥ प्रियस्यभाव.। त्व :॥ प्रीतिकरत्वे॥

प्रियदर्शन :। पुं॰ क्षीरे। शुकविहङ्गमे॥ क्षीरिकाद्रुमे॥ त्रि॰ चक्षुष्ये। सुदर्शने॥ प्रियंदर्शनमस्य॥

प्रियप्रायम्। न॰ चटुनि। चाटुनि। प्रियशाक्ये॥ इतिहेमचन्द्र॥

प्रियम्भविष्णु '। त्रि॰ इष्टार्थोद्युक्ते। उत्सुके॥

प्रियमधु :। पुं॰ एककुण्डले। बलदेवे। अच्युताग्रजे॥ प्रिय मधु मद्य यस्य॥

प्रियरूप '। पुं॰ कामे॥ न॰ अप्सर प्रभृतीनांरूपे॥ त्रि॰ मनोहररूपवति॥

प्रियवर्णी। स्त्री॰ श्यामायाम्। गुन्द्रायाम्। प्रियङ्गौ॥

प्रियवल्ली। स्त्री॰ प्रियङ्गौ॥

प्रियवादी। त्रि॰ तत्कालमधुरवाक्यवक्तरि॥ मनोज्ञवक्तरि॥ यथा। कोतिभार समर्थानाकिन्दूरंव्यवसायिनाम्। कोविदेश सुविद्यानाक ' पर ' प्रियवादिनाम्मिति॥

प्रियव्रत '। पुं॰ स्वायम्भुवमनो पुत्रे। यथा। प्रियव्रतोत्तानपादौमनोस्वायम्भुवस्यतु द्वौपुत्रौसुमहावीर्यौ धर्मज्ञौकथितौतव॥

प्रियश्रवा। पु॰ भगवतिवासुदेवे॥ प्रियश्रवोयस्यस.॥

प्रियसख । पु० खदिरे ॥
प्रियसत्यम् । न० सूनृतवाक्ये ॥
प्रियसन्देश । पु० चम्पकवृक्षे ॥ प्रियसवादे ॥
प्रियसालक । पु० असनवृक्षे । विजयसार० इ० भा० ॥
प्रिया । स्त्री० भार्यायाम् ॥ नार्याम् । एलायाम् ॥ मदिरायाम् । मल्लिकायाम् ॥ वार्त्तायाम् ॥ प्रियङ्गौ ॥ मध्याङ्कत्तिप्रभेदे ॥ यथा । जोहलदृश्यते । साप्रियाकथ्यते ॥ यथा । नौमिगोपालकम् । देवकीबालकम् ॥ मृगीतिनामान्तरम् । रोमृगीतिलक्षणात् ॥ सुप्रतिष्ठाप्रभेदेपि । सलगै । प्रिया ॥ यथा । व्रजसुभ्रुवो विलसत्कला । अभवन्प्रियामुरवैरिण ॥
प्रियाम्बु । पु० आम्रवृक्षे ॥ न० आम्रफले ॥ हृद्यजले ॥
प्रियार्ह । पु० नारायणे ॥ स्वेष्टदेवे प्रियाणीष्टान्यर्हतिअर्पयितुयोग्योभवतीतितथा । कर्मण्यण् ॥ यथा० यद्यदिष्टतमंलोकेयच्चास्यदयितगृहे । तत्तन्निवेदयेत्तदेवाक्षयमिच्छता ॥ इतिमार्कण्डेयपु० ॥ अपिच । यद्यदात्मप्रियद्रव्य तत्तदिष्टायकल्पयेत् ॥
प्रियाल: । पु० राजादने । पियाले ॥ चारश्चचफलंपक्व द्रव्य गौल्याम्लकगुरु । तद्बीजमधुरवृष्य पित्तदाहार्ति नाशनम् ॥ प्रीणाति । प्रीञ्० । बा० कालन् ॥
प्रियाला । स्त्री० द्राक्षायाम् ॥
प्रियोदितम् । न० प्रियवाक्ये ॥ प्रियञ्च तत्उदितञ्च ॥ त्रि० प्रियवाक्यविषये ॥
प्रीण । त्रि० पुरातने । प्रतने ॥ नश्च पुराणेप्रादिभ्य० वेनसमुच्चित ख ॥ प्रीते ॥
प्रीणनम् । न० तर्पणे । तृप्तौ ॥ प्रीञ् । स्वार्थेण्यन्तात्ल्युट् ॥ प्रीञ्प्रीओ-रितिनुक् ॥
प्रीणयन् । त्रि० तर्पयति ॥ प्रीञोण्यन्तात्शट शतृशानचावित्यादिनाशट शचादेश० धूञ्प्रीओर्नुग्वक्तव्य इतिनुगागम ॥
प्रीणस । पु० गण्डके ॥
प्रीत । त्रि० हृष्टे । मत्ते । तृप्ते ॥ नर्तिथि ॥ प्रीयतेस्म । प्रीङ्प्रीणने । क्त ॥
प्रीति । स्त्री० मुदि । प्रमदे । हर्षे । सुखे ॥ इष्टदर्शनजन्ये सुखे ॥ भोजनकालेऽनभिरुचिराहित्ये । इच्छौ-त्कण्ठे ॥ विष्कम्भादिषुद्वितीययोगे ॥ तत्रजातस्यफलयथा । प्रसूतिकालेयदिप्रीतियोगोनरोच्चरोग । सुखवान्प्रमोदी । रक्तानुरक्तोविदुषा प्रपन्न । सम्प्रार्थितोयच्छतिवित्तमेव ॥ रत्या सपत्न्यांस्मरपत्न्याम् ॥

प्रेमण्यि ॥ यथा । याप्रीतिरविवेका नाविषयेष्वनपायिनी । त्वामनुस्म रत सामेहृदयान्मापसर्पतु ॥ मा प० हेश्रीपते । मापसर्पतुवा ॥ प्रेम लक्षणाप्रीतिर्ह्यात्मनिमुख्यान्यत्रगौ णी । तथाचोक्तवार्तिकसारे । स्वा त्मभोगस्यहेतुत्वात्प्राणादौप्रीतिरि ष्यते । सस्वतोतोन्यसामुख्याच्चात्म- प्रीतिर्यथातथा ॥ प्रतीचिनिर्निमित्तै वसर्वावस्थासुवोच्यते । प्रीतिरन्यत्र त्वात्रत्तस्मान्मुख्यासावितिगम्यता म् ॥ सर्वान्तरतरत्वेनयुज्यतेनिर्निमि त्तता । वाह्येषुसनिमित्तत्वप्रीते स्पष्टगवादिषु ॥ व्याध्याद्युपद्रुतो लोकेमृतिमप्यभिवाञ्छति । निर्नि मित्तप्रियत्वेतुदेहादेस्तन्नयुज्यते ॥ इति ॥ प्रीञ्तर्पणे । भावेक्तिन् ॥ यदीच्छेद्विपुलाप्रीतिंचोणितजनका रयेत् । वाग्विवादोर्थसम्बन्ध परो क्षेदारभाषणम् ॥

प्रीतिजुषा । स्त्री० उषायाम् । अनि रुद्धपत्न्याम् ॥

प्रीतिद । पु० वासन्तिके । केलिकि ले । विदूषके । भाड० इ० भा० ॥ कामुके ॥ वि० सुखप्रेमदातरि ॥

प्रीतिदत्तम् । वि० प्रीत्यादत्तवस्तुनि । यथा । प्रीत्यादत्तन्तुयत्किञ्चिच्छ्वश्रा वाश्वशुरेणवा । पादवन्दनिकञ्चैव प्रीतिदत्तंतदुच्यते ॥ प्रीतिदाने ॥

भावेक्त : ॥

प्रीतिदानम् । न० प्रसादे ॥

प्रीतिभोज्यम् । न० प्रीत्याभक्षणीयेऽन्ना दौ ॥ यथा । अन्नानिप्रीतिभोज्यानि आपद्भोज्यानिवापुन । नचस म्प्रीयसेराजन्नचैवापद्गतावयम् ॥

प्रीतयुक् । वि० स्निग्धे ॥

प्रीत्यात्मक । पु० सत्त्वगुणे ॥ प्रीति सुखमात्मायस्य स ॥

प्रुचि । पु० प्लुचौ ॥

प्रुष्ट । वि० दग्धे ॥ प्रुष्यतेस्म । प्रुष दहे । क्त । यस्येतिनेट् ॥

प्रुष्व । पु० ऋतौ ॥ सूर्ये ॥ प्रोषति । प्रुष० । अशूप्रुषिलटीतिक्वन् ॥

प्रुष्वा । स्त्री० जलकणिकायाम् । टा- प् ॥

प्रेक्षणम् । न० चक्षुषि ॥ दर्शने ॥

प्रेक्षणकूट । पुं० चक्षुर्गोलके ॥

प्रेक्षणीय । वि० दर्शनीये ॥

प्रेक्षा । स्त्री० उपलब्धौ । बुद्धौ ॥ नृत्ये क्षणे ॥ ईक्षणे ॥ प्रकृष्टमीक्षणमन यावा । ईक्ष० । गुरोश्चहल । टाप् ॥ वृक्षशाखायाम् ॥

प्रेङ्खन् । वि० चलनविशिष्टे ॥ सक्ति विशिष्टे ॥

प्रेङ्खा । स्त्री० पर्यटने ॥ अश्वगतौ ॥ सवेशनान्तरे ॥ नृत्ये ॥ दोलायाम् ॥ प्रेङ्ख्यते । इखिगतौ ॥ घञ् । टाप् ॥

प्रेङ्खित : । त्रि० कम्पिते ॥ प्रेङ्खतिस्म । इति० । क्त : ॥

प्रेङ्खोलनम् । न० दोलायाम् । दोलने ॥

प्रेङ्खोलित : । त्रि० दोलिते । तरलिते । लुलिते ॥ न० रतबन्धान्तरे ॥ सर्वत . कटिपरिभ्रमोयदिप्रेङ्खपूर्वमिदमुक्तमारतम् ॥

प्रेत । पुं० नरकस्थप्राणिनि ॥ भूतप्रभेदे ॥ स्वधर्मात्प्रच्युतोविप्रोदेहपातादूर्ध्वंवायवीयदेहमापन्नउल्कामुखरटभूतनादिसंज्ञ . प्रेतउच्यते । यथा । वान्ताश्युल्कामुख . प्रेतो विप्रोधर्मात्स्वकाच्च्युत । इति ॥ भूतप्रेतपिशाचानालोकायथा । अरीरचराश्चैवभूतप्रेतपिशाचका . । वर्जयित्वारुद्रगणांस्तेतत्रैवचरन्तिहि ॥ लोर्द्ध्वंविक्रमणेशक्तिस्तेषांसम्भूतदाप्मनाम् । अतऊर्ध्वंहिनिम्नेन्द्रराच सायेकृतेनस . ॥ तेतुसूर्यादिथ ' स वैविश्वरन्त्यूर्ध्ववर्जिता . । इतिपाद्मे स्वर्गखण्ड ॥ वैदिकविधानेनौर्ध्वदैहिकाभावात् वैष्णवेपाकवहुनरकभोगान्ते प्रेतशरीरभवतीति पुराणेप्रसिद्धमस्ति ॥ त्रि० मृते ॥ अर्वाकसपिण्डोकरणात्प्रेतोभवति वैमृत ॥ प्रेति । इण० । गत्यर्थेति क्त . ॥

प्रेतकार्यम् । न० मृतस्यदाहादिसपिण्डीकरणान्तकर्म च ॥ यथा । वक्ष्यामिप्रेतकार्याणिप्रेतस्यधनहारका . । वर्णानांयद्यथेप्रोक्तं तद्व्रतनियतश्चरेत् ॥ इति ॥

प्रेतकृत्या । स्त्री० पितृपकारार्थायांक्रियायाम् ॥ प्रकर्षेणइत : प्रेत . पितृलोकस्थएवोच्यते ॥

प्रेतगृहम् । न० श्मशाने ॥

प्रेततर्पणम् । न० मरणावधिसपिण्डीकरणपर्यन्तप्रेतमुद्दिश्यतिलजलदाने ॥

प्रेतनदी । स्त्री० वैतरिण्याम् ॥ प्रेतानांनरकस्थप्राणिनांनदी ॥

प्रेतपटह : । पुं० भवकृदि । मृत्युभङ्कृति । मृत्युकालेवादनीयवाद्यविशेषे । गौरु० इ० भा० ।

प्रेतपति : । पुं० यमे । प्रेतराजे । प्रेतानांपति : ॥

प्रेतपिण्ड । पुं० मरणावधिसपिण्डीकरणपर्यन्त प्रेतसम्प्रदानकपिण्डाकारान्ने ॥ यथा । नवधास्वप्रयुञ्जीतप्रेतपिण्डे दशाह्निके । भावितैतस्य देपिण्डयच्छदशाङ्गपूरकम् ॥ प्रेतपिण्डानदीयन्ते यस्य तस्यविमोक्षणम् । श्मशानिकेभ्यो देवेभ्यआकल्पं नैव विद्यते ।

प्रेतपुरम् । न० यमालये ॥

प्रेतमाता । स्त्री० काल्यादिषु ॥ कालीकरालीभद्राचभीमाचैवभयोत्कटा । रुधिरणीदुराधर्षासम्मता

प्रेतमातर ॥
प्रेतराक्षसी । स्त्री० तुलस्याम् ॥
प्रेतवनम् । न० श्मशाने ॥
प्रेतवाहित । त्रि० भूताविष्टे ॥
प्रेतशिला । स्त्री० पिण्डदानार्थगयास्थितप्रस्तरविशेषे ॥ यथा । येयप्रेतशिलाख्यातागयायासाचिधास्थिता प्रभातिप्रेतकुण्डेचगयासुरशिरस्यपि ॥
प्रेतशौचम् । न० मृतसंस्कारादौ ॥
प्रेता । स्त्री० वैतरणीनद्याम् ॥ मृतायाम् ॥ प्रेतभावापन्नायाम् ॥
प्रेत्य । अ० अमुत्र । जन्मान्तरे ॥ देहत्यक्त्वात्यर्थे ॥ प्रकर्षेणइत्वा । इण्० क्त्वाप्रत्यय. । समासेइतिल्यप् । तुक् ॥ व्यावर्त्यत्यर्थे ॥
प्रेत्यभाव । पु० पुनरुत्पत्तौ ॥ तथाचगौतमसूत्रम् । पुनरुत्पत्तिः प्रेत्यभाव । १९ ॥ प्रेत्यमृत्वाभावो जनन०प्रेत्यभाव । तत्रपुनरित्यनेनाभ्यासकथनात्० प्रागुत्पत्तिस्ततोमरणततउत्पत्तिरिति । प्रेत्यभावोजननादिरपवर्गान्त । एतज्ज्ञानञ्चवैराग्यउपयुज्यते०इति०प्रेत्य तिनव्यर्थम् । तदीयमरणञ्चतदीयजीवन.इष्टनाशस्तदीयस्वरसप्राणसयोगध्वसस्तदीयप्राणध्वसोवा । तदीयोपपत्तिस्तु०तदीयविजातीयशरीराद्यप्राणसयोगइति ॥

प्रेत्वा । पु० वासवे ॥ वाते ॥ प्राणेषु ॥
प्रेत्वरी । स्त्री० पुरि ॥
प्रेमा । पु० न० प्रियतायाम् । हार्दे । स्नेहे ॥ हर्षे ॥ नर्मणि ॥ रम्येषु दिदृक्षायाम् ॥ प्रियस्यभाव पृथ्वादित्वादिमनिच् । प्रियस्थिरेतिप्रादेश ॥ प्रयणम् । प्रीङ्तर्पणे । मनिन्वा ॥ नपुंसकलिङ्गम् ॥ गुणत्वात् प्रेमाणोनपरिचयत्वात् । पुंस्त्वमपि ॥ क्नेहवाचक.लक्षणं यथा । सर्वथ.ध्वसरहितसत्यपि ध्वसकारणे । यद्भावबन्धनयूनो. स प्रेम.परिकीर्तित ॥ इत्युज्ज्वलनीलमणि ॥
प्रेमपरिप्लुत । त्रि० प्रेमरसमग्ने ॥
प्रेमपातनम् । न० नेत्रजले ॥
प्रेमालिङ्गनम् । न० स्नेहेनपरिष्वङ्गे ॥ नायिकानायिकयोरालिङ्गनविशेषे ॥ तल्लक्षणयथा । नायककटि नायिकयैकपादेनवेष्टयित्वाद्वितीयपादतस्यजङ्घे परिस्थापयित्वायदालिङ्गनतदितिकामशास्त्रम् ॥
प्रेयान् । पु० पत्यौ । प्रिये । दयिते । कान्ते ॥ कान्ते ॥ त्रि० प्रियतरे । पशुपुत्रादिलक्षणे ॥ अयमनयोरतिशयेनप्रिय । ईयसुन् । प्रियस्थिरेतिप्रादेश । न० सर्वान्तरे०ब्रह्मात्मनि ॥

प्रेयसी । स्त्री० प्रियतमायामार्याम् । दयितायाम् । कान्तायाम् ॥ वल्लभायाम् ॥ ङीप् ॥

प्रेरक । पुं० राजादौ ॥ प्रयोजके ॥ विधौ ॥ प्रेरणामेवकुर्वन्प्रेरकोविधि ॥ प्रेरयति । प्रोपपदादीर्तेर्हेतुमण्णिजन्तात्०कर्मणि० एवुल् ॥

प्रेरणम् । न० प्रेषणे । पठावना० इ० भा० ॥ आज्ञापने । स्वस्वकार्येषुनियोजने ॥ अश्वानाषड्विधप्रेरणाय या । वाहनप्रतिवाहानाषड्विध प्रेरणविदु । रागावल्गाकषापार्ष्णिप्रतोदरवभेदतइति ॥ प्रकृष्टम् ईरणम् ॥

प्रेरणा । स्त्री० चोदनायाम् । विधौ ॥

प्रेरित । त्रि० चोदिते । नियोजिते । प्रेषिते ॥

प्रेत्वा । पुं० सागरे । समुद्रे ॥ प्रेरयति । ईरक्षेपे । प्रईरशदोस्तुट्चेति क्वनिप् ॥

प्रेत्वरी । स्त्री० नद्याम् ॥ वनोरचेति ङीप्रौ ॥

प्रेर्य्य । त्रि० प्रेरकाधीने ॥

प्रेष । पुं० प्रेषणे ॥ पीडायाम् ॥ प्रेर्ष्ये ॥

प्रेषणम् । न० प्रेरणे ॥ जानीयात् प्रेषणेभृत्यान्बान्धवान्व्यसनागमे । मित्रञ्चापदिकालेचभार्याञ्चविभवक्षये ॥

प्रेषणा । स्त्री० भृत्यादेर्निकृष्टस्यप्रवर्तनायाम् । आज्ञायाम् ॥

प्रेषित । त्रि० प्रसृते । प्रेरिते । प्रस्थापिते । प्रतिशिष्टे । पठाया० इति भा० ॥

प्रेष्ठ । त्रि० प्रियतमे । अयमेषामतिशयेनप्रिय । प्रियस्थिरेत्यादिनेष्ठनिसाधु ॥

प्रेष्ठा । स्त्री० प्रेयस्याम् ॥ प्रमृतायाम् ॥

प्रेष्य । त्रि० विधेये । सेवके । भृत्ये ॥ प्रेष्यते । ईषगत्यादिषुवा ण्यत् । गुण ॥

प्रैयङ्गवीनम् । न० प्रियङ्गुक्षेत्रे । प्रियङ्गूणाभवनक्षेत्रम् । धान्यानाभवनेक्षेत्रेखञ् ॥

प्रैष । क्लेशे ॥ मर्द्दने ॥ उन्माने ॥ विधौ ॥ प्रेषणे ॥ प्रेषणम् । इषिभ्यां घञ् । प्रादूहेतिवृद्धि ।

प्रैष्य । त्रि० प्रेष्ये ॥ प्रेष्यते । इषु इच्छायाम् । इषगतौ० आभीक्ष्ण्ये च । ण्यत् । प्रादूहेतिवृद्धि ॥

प्रोक्त । त्रि० कथिते ॥ प्रकर्षेण० च्यापनेन० अर्थव्याख्यानेनवाउक्त । प्रकाशित ॥

प्रोक्षणम् । न० सेचने ॥ वधे । यज्ञार्थंपशुहिंसने ॥ प्रकृष्टमुक्षणम् । उक्षसेचने । ल्युट् ॥

प्रोक्षणी । स्त्री० जलक्रीडाविशेषे । क्रीटाखेलना० इ० भा० ॥ प्रोक्षणी

भिरुद्दे जितास्मद्गतिप्रयोगात् ॥
प्रोच्चित । त्रि० निहते । यज्ञे हतपशौ । उपसम्पन्ने । यज्ञार्थमन्त्रैः संस्कृतमांसादौ ॥ यथा । भक्षयेत् प्रोक्षितमांसं सकृद्ब्राह्मणकाम्यया । दैवे नियुक्तः श्राद्धे वा नियमे तु विवर्जयेत् । आरण्याणामिदानीतनप्रोक्षणापिशानां स्तीक्ष्णु त्तम-हाभारते । यथा । आरण्याः सर्वदैवत्याः प्रोक्षिताः सर्वशो मृगाः । अगस्त्येन पुरा राजन् मृगयायेन पूज्यते० इति । सिक्ते ॥ प्रोचतेस्म । उच० । क्त ॥ मन्त्रसंस्कृते ॥
प्रोच्छलत् । त्रि० उद्गच्छति । उच्छलत् ता०इ०भा० ॥
प्रोञ्छनम् । न० प्रवर्ज्जने । लोपने । पूञ्छना०इ०भा० ॥
प्रोज्जासनम् । न० मारणे ॥
प्रोज्झित । त्रि० त्यक्ते ॥
प्रोथ' । पु० कटकोले । पतद्ग्रहे ॥
प्रोतम् । न० ' स्वे । वाससि ॥ त्रि० खचिते । व्याप्ते ॥ गुम्फिते । ग्रथिते ॥ स्यूते । प्रविष्टे ॥ प्रमते । प्रतिष्ठिते ॥ प्रचिमे ॥ पटेतिर्यक्तान्तौ ॥ वह्निर्व्याप्तौ ॥ प्रपूर्वाद्वेञ . कर्मणिक्त । यजादित्वात्सम्प्रसारणम् ॥
प्रोतोत्सादनम् । न० छत्रे । वस्त्रकुट्टिमे ॥

प्रोत्फल' । पुं० सिंहलास्थाने ॥ तलवृक्षसदृशवृक्षविशेषे । छडी०छ-डा०इ०गो०भा० ॥
प्रोत्फुल्ल । त्रि० विकसिते ॥
प्रोत्साह । पुं० प्रकृष्टोद्यमे ॥
प्रोथ । पु० कथ्याम् ॥ सिचये । शाटके । स्त्रीगर्भे ॥ छागलेवस्ते ॥ गह्वरे ॥ पु०न०घोणायाम् । अश्वनासिकायाम् ॥ त्रि० अध्वगे ॥ प्रथिते ॥ प्रोथति । प्रोथृपर्याप्तौ । पुसीतिप । प्रवतेवा । प्रुङ्गतौ । तिथगृहगूथयूथप्रोथा० इ०यक् । निपातनाद्गुण ॥
प्रोद्यत । त्रि० सोद्यमे ॥
प्रोष । पु० सन्तापे
प्रोषित । त्रि० प्रवासगते । विदेशस्थे ॥ अपगते ॥
प्रोषितभर्तृका । स्त्री० विदेशस्थभर्तृकायाम् ॥ हास्य परगृहेयानसमाजोत्सवदर्शनम् । क्रीडाशरीरसंस्कार त्यजेत्प्रोषितभर्तृका ॥ प्रोषितोभर्त्तायस्याः ॥ स्त्रीयादिनायिकाभेदे ॥ देशान्तरगतपत्यौसन्तापाकुलाप्रोषितभर्तृकेतिलक्षणम् ॥
प्रोष्ठ' । पु० गवि ॥ शफर्याम् । प्रोष्ठीमत्स्ये ॥ प्रकृष्टओष्ठोऽस्य । ओत्वोष्ठयोः समासेवा ॥
प्रोष्ठपद । पुं० भाद्रमासे ॥

प्रोष्ठपदा । स्त्री० पूर्वभाद्रपदोत्तरभाद्रपदयो : ॥ प्रोष्ठोगौस्तस्येवपादा यासाम् सुप्रातसुश्वसुदिवशारिकुक्षीत्यादिनाबहुव्रीहावच् ०पदात-स्वनिपातित ' ॥

प्रोष्ठपदी । स्त्री० भाद्राम्पूर्णिमायाम् ॥

प्रोष्ठपाद : । पुं० प्रोष्ठपदासुजाते ॥ सन्धिवेलेत्यादिनाऽण् । वो प्रोष्ठपदानामित्युत्तरपदस्याचामादेरचीवृद्धि . ॥

प्रोष्ठी । स्त्री० शफरे । शफर्याम् । वैवरीमत्स्री०सफरी०पोठी०पूठी०. इ०भा०प्र०मत्स्ये ॥ प्रोष्ठीति-क्ताकटु . स्वादु ' शुक्रश्लेष्मकफवातजित् । स्निग्धास्यकण्ठरोगघ्नीरोचनीचलघु'स्मृता ॥ प्रकृष्टप्रोष्ठोस्या. । ओत्त्वोष्ठयो : समासेवा । नासिकोदरोष्ठेति०जाते रितिवाङीष् ॥

प्रोष्य ' अ० देशान्तरेऽवस्थित्यर्थे ॥

प्रोह ' । पुं०गजाङ्घ्री ' हस्तिपादे ॥ पर्वणि ॥ गजचरणपर्वणि ॥ प्रोह-श्चरणपर्वणीतिचिकाण्डशेष ॥ त्रि ०निपुणे ०तर्के ।'

प्रौढ : । पु० वत्सरे ॥ त्रि० प्रगल्भे ॥ प्रवृद्धे । वर्द्धिते । एधिते ॥ निपुणे । प्रोह्यतेस्म । वह० । क्त ' सम्प्रसारणम् ' प्रादूहेलिवृद्धि : ॥

प्रौढपाद : । पुं० आसनारोपितपादतले । आसनोपरिपादतलद्वयस्थोगपूर्वकोपवेष्टरि ॥ वस्त्रादिनाकृतपृष्ठजानुजङ्घाबन्धे । वस्त्रादि-द्वारापृष्ठजानुजङ्घाद्वयदृढबन्धनपूर्वकोपवेष्टरि यथा । आसनारूढपादस्तुजानुनोर्जङ्घयोस्तथा-। कृतावसक्थिकोयस्तुप्रौढपाद : सउच्यते ॥ स्नानमाचमन होमभोजन देवताऽर्चनम् । प्रौढपादोन कुर्वीतस्वाध्याय पितृतर्पणम् ॥ इतिकात्यायन ॥ अनेकोहाद्यैदा रुशिलेभूमिसमेइष्टकास्वसङ्कीर्णीभूताद्इतिबौधायनवचनात्तथाविधेआरूढपादोपिकुर्यात् । इत्याह्निकतत्त्वम् ॥

प्रौढा । स्त्री० नायिकाभेदे । चिरस्याम् । श्यामायाम् ॥ यथा । बाला-तुतरुणीप्रौढावृद्धाभवतिनायिका । गुणयोगेनरन्तव्या नारीवश्याभवेत्सदा ॥ त्रिशद्वर्षादूर्द्ध्वम्पञ्चपञ्चाशद्वर्षपर्यन्तप्रौढावस्था । यथा । आषोडशीभवेद्बालातरुणीत्रिंशतामता । पञ्चपञ्चाशतौप्रौढा भवेद्वृद्धाततः : परम् ॥ आसावशत्वकारणयथा । अलङ्कारादिभिर्बाला तरुणीरतियोगत . । प्रेमदानादिभि प्रौढा वृद्धाचदृढताडनात् ॥ आसांरमणेगुणदोषायथा । बालातुप्राणदाप्रो

प्रच .

क्तातरुणीप्राणहारिणी । प्रौढाकरो तिव्रद्वत्वह्वामरणादाभवेत् ॥ मुग्धा दिनिविधान्तर्गतप्रगल्भायानायि- कायाम् ॥ स्मरमन्दीकृतव्रीडाप्रौ ढासपूर्णयौवना ॥
प्रौढि । स्त्री० उत्साहे । प्रगल्भता याम् ॥ उद्यमे । उद्योगे । कियदे तिकायाम् ॥ सामर्थ्ये ॥
प्रौष्ठपद । पु० भाद्रमासे । प्रौष्ठप दीपौर्णमास्यस्मिन् । सास्मिन्पौ र्णमासीत्यण् ॥
प्रौष्ठपदिक । पु० प्रोष्ठपददेवताके ॥ प्रोष्ठपदोदेवतास्य । महाराजप्रोष्ठप दाट्ठञ् ॥
प्रौष्ठपदी । स्त्री० भाद्रपौर्णमास्याम् ॥ प्रौष्ठपदाभि पूर्वभाद्रपदोत्तरभाद्र पदाभिर्युक्तापौर्णमासी । नक्षत्रे णयुक्त कालइत्यण् । ङीप् ॥
प्रौह । पुं० प्रोहे ॥ प्रकर्षेणजह : । इति ॥
प्लक्ष । पुं० जटिनि । पर्कट्याम् । पाखर० हि० प्र० वृक्षे ॥ प्लक्ष . क षाय . शिशिरोव्रणयोनिगदापह । दाहपित्तकफास्रघ्न शोथहारक्त- पित्तहृत् ॥ गर्दभाण्डे । कन्दराले । गैंडो० हि० वृक्षे ॥ कुञ्जराशने । अश्वत्थे ॥ पक्षके । सर्पान्तरे० । प्लुष्यति । प्लुष० । प्लुषेरक्षोपधाया इतिस ॥ प्रक्षरति० वा० । क्षर-

प्लव :

सञ्चलने । अन्यचापीतिड । कपि लकादि . ॥ यद्वा । प्रच्यते । प्लक्ष भक्षणे । कर्मणिघञ् । प्लक्षस्थधोग क्कतिव । अच् ॥ द्वीपविशेषे ॥ जम्बुद्वीपस्थविस्ताराद्विगुणेनसम- न्तत . । सवेष्टयित्वाक्षीरोदप्लक्षद्वी पोव्यवस्थित ॥ प्लक्षद्वीपेचविप्रे न्द्रा : सप्तासन्कुलपर्वता . । ऋट- ज्वायता सुपर्वाण सिद्धसङ्घनि षेविता ॥ गोमेदइत्यस्यैवनामा न्तरम् ॥
प्लक्षसरस्वती । स्त्री० तीर्थविशेषे ॥
प्लक्षोदुम्बर . । पु० तीर्थविशेषे ॥
प्लव । पुं० प्लवने । प्लुतौ ॥ भेले । भेलके । डोंगा० हि० प्र० जलतर णसाधने ॥ भेके । दर्दुरे ॥ अवौ ॥ श्वपचे । चाडाले ॥ कापी । मर्क- टे ॥ जलकाके कुलके ॥ प्रवणे । ग्रामनिम्नमहीभागे पर्कटीद्रुमे ॥ कारण्डवखगे ॥ शब्दे ॥ प्रतिगतौ ॥ म्लेच्छजातौ ॥ जलान्तरे ॥ जलकु क्कुटे । हंसादिजलचरपक्षिषु ॥ तेयथा । हंससारसकाचाक्षवक्राक्रौ ञ्चशरारिका : नन्दीमुखीसकाद म्बावलाकाद्या प्लवा स्मृता ॥ प्लवन्तेसलिलेयस्मा देतेतस्मात्प्ल वा स्मृता . ॥ प्लवा पित्तहरा स्निग्धामधुरागुरवोहिमा . । वात श्लेष्मप्रदाश्चापिबलशुक्रकरा सरा

॥ ३५ वत्सरवि० । दुर्भिक्षजाय तेसर्वामेदिनीपुष्यतिप्रिये । प्लवेप्लवन्तितोयानि पीडितामानवाभुवि ॥ ३५ न० कैवर्तीमुस्तके गन्धतृणे ॥ प्लवते प्लुङ् अच् । यद्वा । प्लवनम् प्लुङ्गतौ कर्तरि ल्युट् । प्लूयतेऽनेनवा ॥

प्लवक । पुं० खड्गधारादिनर्त्तके । कीलकी ॥ चाण्डाले ॥ वृक्षे ॥ भेके ॥

प्लवग । पु० कपौ । वानरे ॥ भेके ॥ मण्डूके ॥ सूर्यस्यसारथौ ॥ शिरीष वृक्षे । सुमतिनाम्नोर्हशिरीषस्य ७८ ॥ प्लवेनगच्छति । गम्लृ० अन्ये भ्योपीत्यन्ये ष्वपीतिवाड ॥

प्लवगति । पु० भेके । मण्डूके ।

प्लवङ्ग । पुं० प्लवगे । शाखामृगे ॥ प्लक्षवृक्षे ॥ ४१ ॥ वत्सरे ॥ तृणधा न्यानिपीड्यन्तेग्रीष्मे वर्षतिवासव प्लवङ्गपीडिता सर्वा प्रजाइसुर वन्दिते ॥ ४१ ॥ प्लवनम्०प्लव । प्लुङोप । प्लवेनगच्छति । गम्लृ० अन्येभ्योपीत्यन्ये ष्वपीतिवाड गमस्खेतिखच् खच्चडिद्वा । मुमागम ॥ मृगे ॥

प्लवङ्गम । पु० मण्डूके ॥ शाखामृगे प्लवेनप्लुत्यागच्छति । गम्लृ० । गमश्चेतिखच् । मुमागम ॥ मात्राछन्दोन्तरे ॥ यथा षट्कलमादि गुरु प्रथमङ्करुसन्ततम्० पञ्चकल मततोपिचतुष्कलसङ्गतम् । नायक मत्रचतुर्थमितोगुरुमन्तके० एकाधि कविंशति प्लवङ्गमतत्सके ॥ यथा । विष्णुविरञ्चिदिवाकरवासवव न्दितम् ० विस्मृतविषयविपाटक मुनिजनसेवितम् । चञ्चलमानुनि तत्वसुख नहिकामये ० शङ्करपाद सरोजरज परिभावये । इति ॥

प्लवन । त्रि० प्रवणे । क्रमनिम्नभू मौ ।

प्लवमान । त्रि० तरति ॥ तैरत० तैरता० हु० भा० ॥

प्लविन । त्रि० भेलेनतरमाणे ॥ प्लवेनतरतिनोइ्व्यचष्टन् ।

प्लाक्षम् । न० प्लक्षफले ॥ प्लक्षस्यफलम् । प्लक्षादिभ्योण् । विधानसामर्थ्यात् तस्यफलेनलुक् ॥

प्लावनम् । न० द्रवद्रव्यस्योर्ध्वप्रापणे । उफलना ० उपटाना० हु० भा ० ॥ य० । तापन घृततैलानाम्प्ला वन गोरसस्यच । तन्मात्रमुद्धृत शु ध्येत्कठिनन्तुपयोदधि ॥ मज्जने । बहुतरजलसंयोगे ॥

प्लावित । त्रि० जलादिमग्नस्थाना दौ ॥ सिक्ते ॥

प्लिहा । पु० प्लीहरोगे । गुल्मे ॥ यथा । यकृत्प्लिहान्नाशिम्बादि बधिपञ्चितिवैद्यकम् ॥

प्लीहघ्न । पु० रोहिणि । रोहितके

। दाडिमपुष्पके । रोहडागाच्छ०
इ० गौ० भा० प्र०वृत्ते ॥

प्लीहा । पुं० गुल्मे । कुक्षिवामपार्श्व
स्थमांसखण्डे । पिल्ही० तापतिल्ली
० इ०भा० ॥ शोणिताज्जायते प्ली
हा वामतोहृदयादधः । रक्तवाहि
शिराणांसमूलंख्यातोमहर्षिभिः
॥ विदाह्यभिष्यन्दिरतस्य जन्तोः
प्रदुष्टमत्यर्थमसृक् कफश्च । प्लीहा
भिवृद्धिंकुरुतः प्रवृद्धौ प्लीहसञ्ज्ञ
मदमामनन्ति ॥ प्लेहते । प्लिहगतौ
। श्वन्नुक्षन् पूषन् प्लीहन्नित्यादि
नासाधु ॥

प्लीहघ्नः । पुं० दाडिमपुष्पके ।
रोहितकद्रुमे ॥ स्वल्पफलाम्बुषा
याम् ॥ शरपुङ्खे ॥ प्लीहघ्नः
॥ विभीतके कोकिलाक्षे० ।

प्लीहघ्नी । स्त्री० अश्वत्थफलायाम्
। हवुषायाम् ॥

प्लीहा । स्त्री० प्लीहरोगे ॥ यकृत्
प्लीहेचसम्बन्धे० इतिप्रयोगात् ॥

प्लीहारिः । पुं० अश्वत्थवृक्षे । प्ली
हायाश्शरिः ॥

प्लीहाघ्नः । पुं० प्लीहघ्ने ॥ कोकि
लाक्षे० ॥

प्लुषिः । पुं० अग्नौ । प्लोषति
प्लुष० । प्लुषिकुषिशुषिभ्यः
क्सि० ॥

प्लुतः । पुं० त्रिमात्रवर्णे ॥ न० अ
श्वगतिविशेषे ॥ त्वरयाकम्पेनाश्व
गतौ ॥ उत्पतने ॥ तिर्य्यग्गतौ ॥
त्रि० आप्लुते ॥ प्रसृते ॥ कम्पगति
युक्ते प्लवनम् । प्लुङ्गतौ ॥ भावेक्त ॥

प्लुतिः । स्त्री० प्लवने ॥

प्लुषः । पुं० दहने ।

प्लुषिः । पुं० पुत्तिकायाम् । अल्प
मशके ॥

प्लुष्टः । त्रि० दग्धे ॥ प्लुष्यतेस्म । प्लुष
दाहे । क्त यस्येतिनेट् ॥

प्लोषः । पुं० ओषे । दाहे ॥ प्लोषणम्
प्लुष० । घञ् ॥

प्सा । स्त्री० भक्षणे ।

प्सातम् । त्रि० भक्षिते ॥ प्सायतेस्म ।
प्साभक्षणे । क्त ।

प्सानम् । न० भोजने ॥

•※—‡—※•

फः । पुं० पवर्गद्वितीयाक्षरे ॥ यक्षसा
धने ॥ स्फाने ॥ झञ्झावाते ॥ वर्द्ध
के ॥ जभायाम ॥ स्फुटे ॥ फलप्रा
प्तौ । न० रूक्षोक्तौ ॥ फूत्कृतौ ॥
निष्फलभाषणे ॥

फक्किका । स्त्री० पूर्वपक्षे । असद्व्यव
हारे । चौर्ये । फाकी० इ० भा०
॥ न्यायसम्बन्धिव्याख्याविशेषे ॥

फञ्जिका । स्त्री० भार्ग्याम् । ब्राह्मणय
ष्टिकायाम् ॥ भनक्तिरोगान् । भञ्जो
आमर्दने ॥ ण्वुल् । पृषोदरादि ।
देवताडे ॥ दुरालभायाम् ॥

फञ्जिपत्रिका । स्त्री० आखुपर्ण्याम् ॥

फञ्जी । स्त्री० भार्ग्याम् । भनक्तिरोगान् । भञ्जो० अच् । पृ० गौ० ङीष् ॥

फट् । अ० अनुकरणशब्दे ॥ विघ्ननिराकृतौमन्त्रे ॥

फटा स्त्री० फणे ।। दम्भे । स्फुटति । स्फुटविकसने । चु० । णिजभावे० पचाद्यच् । पृषोदरादि ' ।

फडिङ्गा । स्त्री० झिञ्झिकायाम् ॥

फण: । पुं० फणायाम् ॥ फणति । फणगतौ । पचाद्यच् ॥ फटायान्तु फणाद्वयोरित्यमर० । अयोर्णं कारवफणमितिक्लीवकाण्डे चन्द्रगोमी ॥

फणकर । पुं० भुजङ्गे ॥

फणधर । पुं० सर्पे ॥

फणधरधर ' । पुं० शिवे ॥

फणभारी । फणाभृति ॥

फणभृत् । (पुं० ) सर्पे ॥
फणवान् ।

फणा । स्त्री० सर्पविस्तृतमस्तके फटायाम् ॥ फणति । फण० अच् । टाप् ॥

फणाकर । पुं० सर्पे । भुजङ्गमे ॥ फणाकरोऽस्य ॥

फणाधर ' ) पुं० सर्पे कुसीनसे ।
फणाभर, ) हिरसने ॥

फणावान् । पुं० श्वसनाशने । विषाऽऽस्ये । सर्पे ॥ फणास्त्यस्य । मतुप् ।।

फणिकेसर । पुं० नागकेशरे ।। फणिसञ्ज्ञक केसर ।

फणिखेल ' । पुं० भारतीपक्षिणि गरुड़ोधनि । भार० ड़०गौ०भा० ॥

फणिजिह्वा । स्त्री० महाशतावर्याम् ॥ महासमङ्गायाम् ॥ सारिकायाम् ॥

फणिज्झक ' । पुं० प्रस्थपुष्पे । मरुवा० ड़० भा० फणिजातोऽस्मात्०फणाभपत्रपुष्पत्वात् । फणीउज्झकोवर्जकोऽस्येतिकेचित् ॥ उभयत्रपृषोदरादि . ॥ स्त्री० रामदूत्याम् ॥

फणी । पुं० सर्पे ॥ फणाऽस्त्यस्ति । व्रीह्यादित्वादिनि . ॥ सर्पिण्यामोषधौ ॥

फणिप्रिय . । पुं० वायौ ॥

फणिफेन । पुं० अहिफेने ॥

फणिभुवनम् । न० पाताले ॥

फणिवल्ली । स्त्री० नागवल्ल्याम् ॥

फणिहल्ली । स्त्री० रास्नायाम् । गन्धनाकुल्याम् ॥

फणिहृत् । स्त्री० क्षुद्रदुरालभायाम् ॥

फणीश्वर । पुं० अनन्ते ॥ फणिनामीश्वर ' ॥

फण्ड . । पुं० जठरे ॥

फत्कारी । पुं० पक्षिमात्रे ॥

फरम् । न० फलके ॥

फरुवकम् । न० पूगपात्रे ॥

फर्फरीक । पुं० चपेटायाम् । न० मार्दवे ॥

फर्फरीका । स्त्री० पादुकायाम् ॥

फल । पु० कुटजवृक्षे ॥

फलम् । न० जातीफले ॥ सस्ये । वृक्षादीनांफले । फलेषुपरिपक्वयद्गुणवत्तदुदाहृतम् । बिल्वादन्यत्रविज्ञेयमामतद्धिगुणाधिकम् ॥ फलेषुसरसयत्स्याद्गुणवत्तदुदाहृतम् । द्राक्षाबिल्वशिवादीनाफलशुष्कगुणाधिकम् ॥ फलतुल्यगुणसर्वमज्जानमपिनिर्दिशेत् । फलंहिमाग्निदुर्वातव्यालकृटादिदूषितम् । अकालजकुभूमीजपाकातीतनभक्षयेत् । पाकमतिक्रान्तमघटितम् ॥ व्युष्टौ ॥ लाभे ॥ यथा । अग्निहोत्रफलावेदादत्तभुक्तफलधनम् । रतिपुत्रफलादारा शीलवृत्तफलंश्रुतमितिवह्निपुराणेऽग्निवाक्यम् ॥ त्रिफलायाम् ककोले ॥ शस्त्राग्रे । वाणाग्रे ॥ फलके ॥ निरीषे । फाले ॥ दाने ॥ मुष्के ॥ यथा । अफलोभुज्यतेमेषः सफलस्तुनभुज्यते । इतिरामायणम् ॥ हेतुकृते । हेतूत्थे । साधननिष्पाद्ये-काम्ये ०स्वर्गादौ । अभिसन्धीयमाने० शरीरग्रहणे । मायामये ॥ फ-ला,तयालयमदर्शनंगच्छतीतिनिरुक्ते । तच्चफलंकर्मणस्त्रिविधत्त्वात्त्रिविधम् । पापस्यानिष्टफलनारकतिर्यगादिलक्षणम् ॥ २ ॥ पुण्यस्येष्टफलदेवादिलक्षणम् ॥ १ ॥ मिश्रस्यतुपापपुण्ययुगलस्यमिश्रम्० इष्टानिष्टसयुक्तम्मानुष्यलक्षणम् ३ कर्माधीनेपुत्रपशुस्वर्गादिलक्षणेविनश्वरे ॥ जीव कर्मफलभुक् आत्मा निर्लिप्तएव । आत्मन प्रतिविम्ब स्वदेहीजीव सएवच ॥ षड्विधलिङ्गेषुचतुर्थलिङ्गे । प्रकरणप्रतिपाद्यात्मज्ञानस्यतदनुष्ठानस्यवतत्रश्रूयमाणेप्रयोजने ॥ यथाछान्दोग्ये षष्ठप्रपाठके० आचार्यवान्पुरुषइत्यादिवाक्ये न० अद्वितीयवस्तुज्ञानस्यतत्प्राप्तिः प्रयोजनश्रूयते०इति ॥ प्रवृत्तिदोषजनितार्थ . फलम् ॥ २० ॥ इति गोतम । अत्रचमुख्य फलसुखदु:खोपभोग । तथाचभाष्यम् । सुखदु . खसवेदनफलम् । तत्रचधर्माधर्मावृत्ते .प्रयोजकत्वात्०तत्रचदोषस्यहेतुत्वात्० प्रवृत्तिदोषजनितेत्युक्तम् । लक्षणन्तुसुखदु . खान्यतरसाक्षात्कारइति । गौणफलन्तु शरीरादिकसर्वमेव । तथाचभाष्यम् । तत्पुनर्देहेन्द्रियबुद्धिषुसतीषु भवतीति । सहदेहेन्द्रियादिभि . फलमभिप्रेतम् । तथाहि । प्रवृत्तिदोषजनितोर्थ ' फलमेतत्सर्वभवतीति । इत्यस्यजन्यत्वमेवफलत्वम् । प्रवृत्तिदोषजनितइतितुनिर्वेदोपयो

गादुत्तम् २० ॥ नियतोत्तरभाविनि ॥ फलति । फलनिष्पत्तौ० ञि फलाविशरणेवा । पचाद्यच् ॥ फल द्विविधम् । सातिशयनिरतिशयञ्च । तत्रसातिशयस्वर्गादि० निरतिशय मोक्ष सचपरमानन्दस्वरूप ब्रह्म यस्तद्रूपत्वात् ॥ फलफलेधनेबीजे निष्पत्तौभोगलाभयो । सस्यइति केशव. ॥ फलेच्छासाधनसक्रामति ।

फलक । पुं० न० चर्मणि । फले । ढाल० इ० भा० ॥ फलति । ञि-फला० । क्वुआदिभ्योवुन् ॥ पु० दारुघटितदीर्घासने । फला० पट्टा० पटडा० इ० भा० ॥ काष्ठादिपट्टके ॥ यथा । पाण्डुलेखेनफलकेभूमौवाप्रथमलिखेत् । ऊनाधिकन्तुसशोध्य पश्चात्पत्रे निवेशयेत् ॥ इति ॥ अस्थिखण्डे ॥ नागकेसरे ॥ रजकस्यपट्टे ॥ शाल्मलिफलकेश्लक्ष्णेनिज्याद्वासासिनेजक । नचवासासिवासोभिर्निर्हरेन्नचवासयेत् ॥

फलकपाणि । त्रि० चर्मिणि । फलकधारिणि । ढलैत० इ० भा० ॥ फलकपाणौयस्य ॥

फलकी । पुं० फलु इ० गौ० प्र० मत्स्ये ॥ त्रि० फलकान्विते ॥

फलकीतीर्थम् । न० तीर्थविशेषे ॥

फलकृष्ण : । पुं० पानीयामलके ॥

फलकेशर : । पुं० नारिकेलवृक्षे ॥

फलकोषक । पुं० अण्डकोषे ॥

फलग्राही । पु० वृक्षे । त्रि० फलग्रहणकर्त्तरि ॥

फलचमस पुं० दधिमिश्रितवटत्वक्चूर्णे

फलचोरक : । पुं० चोरकनामगन्धद्रव्ये ॥

फलत्रयम् । न० द्राक्षापरूषकाश्मरीषु ॥ त्रिफलायाम् ॥ फलानात्रयं ॥

फलत्रिकम् । न० त्रिफलायाम् ॥ हरीतक्यादित्रये ॥ फ[illegible]लात्रिकम् ॥

फलद पु० [illegible] ॥ वृक्षे त्रि० फलदातरि ।

फलपञ्चाम्लम् । न० अम्लपञ्चफले ॥

फलपाक । पु० पानीयामलके ॥ करमर्दके ॥

फलपाकान्ता । स्त्री० धान्यकदल्याद्योषधौ ॥ फलपाकइवान्तोयस्या. ॥

फलपाकी । पुं० गर्दभाण्डे ॥

फलपुच्छ । पु० बरडालो ॥

फलपुष्पा । स्त्री० पिण्डखर्ज्जूर्याम् ॥ द्रोणपुष्प्याम् । गुम्मा० इ० भा० ॥

फलपूर : । पुं० बीजपूरे । बिजौरा० इ० भा० । फलेनपूर्यते । पूरी० । इगुपधेतिक ॥ कर्म्मणिघञ्वा ॥

फलपूरक . । पुं० छोलङ्गे । बीजपूरे ॥

फलप्रद । पुं० ईश्वरे ॥ धनेदानेन नष्टेपितत्फलप्रदईश्वर . । यतोऽस्तिनदातारतप्रशसन्तिवैदिका

॥ नापूर्वं फलदं तस्मिन्मानाभावा-त्फलपुन । ईश्वरादप्युपपन्नत्वा-न्नैवापूर्वस्य कल्पनम ॥ सेव्यात्रा-त्र फलप्राप्तिर्दृश्यतेनत्वपूर्व्वत । दानादिक्रिययासेव्यादीशात्तत्तत्-फलभवेत् ॥

फलप्रिया । स्त्री० प्रियङ्गौ ॥

फलभूमि । स्त्री० कर्मफलभोगस्था-ने ॥ यथा । भरतान्यैरावतानिवि देहाश्चकुरून्विता । वर्षाणिकर्म्म भूम्य म्यु शेषाणिफलभूमयइति हेमचन्द्र ॥

फलमुख्या । स्त्री० पिण्डखर्जूरे ॥ अज मोदायाम ।

फलमुद्गरिका । स्त्री० पिण्डखर्जूरे ॥

फललक्षणा । स्त्री० प्रयोजनवत्यालक्ष णायाम् ॥ यथा व्यङ्गास्यगूढागूढ त्वाद्विधास्तु . फललक्षणा इति साहित्यदर्पण . ॥

फलवान् । त्रि० फलिनि । फलसहित वृक्षे ॥ फलिने ॥ फलवत् सन्निधा धावफलतदङ्गम् ॥ फलान्यस्यसन्ति । मतुप् ॥

फलवर्त्तुलम् । न० कालिङ्गे ॥

फलविषय : । त्रि० फलव्याप्ये । घना त्मनि ॥

फलवृक्षक . । पुं० पनसे ॥

फलव्याप्यत्त्वम् । न० वाह्येन्द्रियसन्निकृ ष्टार्थाकारवाह्यधीपरिणामावच्छिन्न चिदंशकृते॰प्राकथ्याश्रयत्वे ॥ फलव्या प्तिप्रतिबिम्बितचिदाभासस्तद्व्याप्य त्वमित्यर्थ ॥

फलशाकम् । न० षड्विधशाकान्तर्ग तफलरूपशाके ॥

फलश्रेष्ठ । पु० आम्रे ॥ फलेषुश्रे ष्ठ ॥ तद्वृक्षे ॥

फलषाडव । पुं० दाडिमे ॥

फलशैशिर । पु० वदरवृक्षे ॥

फलश्रुति । स्त्री० कर्म्मप्रवृत्तिनिमि त्तप्रलोभजनकवाक्ये । कर्मफलश्र वणे ॥ यथा । फलश्रुतिरियन्नृणान-श्रेयोरोचनपरम् । श्रेयोविवक्षया-प्रोक्त यथाभैषज्यरोचनम्॥ अपिच । वेदोक्तमेवकुर्वाणोनि. सङ्गोर्पित मी श्वरे । नैष्कर्म्यालभतेसिद्धिरोचना र्थाफलश्रुति ॥

फलस्नेह । पु० अक्षोटवृक्षे ॥

फलहारी । स्त्री० काल्याम् ॥

फला । स्त्री ० झिञ्झिरिष्टाक्षुपे ॥

फलाढ्या । स्त्री० काष्ठकदल्याम् ॥

फलाध्यक्ष : । पु० राजादने । क्षीरि कायाम् । खिरणी० इ० भा० ॥ फलानामध्यक्ष ॥

फलादन । पु ० शुके । कीरे । सूआ ० इ० प्र॰पक्षिणि । त्रि०फलफला निवाअदनयस्य तस्मिन् ॥

फलान्त : । पु ० वंशे ॥ फलेनफलैर्वा अन्तोयस्य ॥

फलाम्ल : । पुं॰ अम्लवेतसे ॥ न॰ वृ चाम्ले ॥

फलाशन . । पु॰ शुकपक्षिणि ॥ त्रि॰ फलभक्षके ॥

फलासव । पु॰ फलरसविकृतौसुरा प्रभेदे ॥

फलि . । पु॰ फलुइ इ॰ प्र॰ मत्स्ये ॥

फलिका । स्त्री॰ निष्पाव्याम् ॥

फलित । पुं॰ वृक्षे ॥ न॰ शैलेये । शिलापुष्पे ॥ त्रि॰ सफले । सञ्जात फले ॥ फलानिसञ्जातान्यस्य । ता रकादित्वादितच् ॥

फलितार्थ । त्रि॰ निष्कृष्टार्थे ॥ फलि तस्यासावर्थश्च ॥

फली । त्रि॰ फलवति ॥ फलान्यस्यस- न्ति । अतइनि ॥

फलिन । त्रि॰ फलवति ॥ विद्यमा नफले । फलान्यस्यसन्ति । फलब- र्हाभ्यामिनच् ॥ पु॰ पनसे फलवति वृक्षेच ॥ इतिराजनिर्घण्ट . ॥

फलिनी । स्त्री॰ प्रियङ्गुवृक्षे । अग्नि शिखावृक्षे ॥ नान्तलक्षणोङीप् ॥

फली । स्त्री॰ प्रियङ्गुवृक्षे ॥ गौरा- दित्वान्ङीष् ॥ फलिमत्स्ये ॥

फलीकरणम् । न॰ तुषे ॥

फलीश . । पु॰ पारिशे ॥

फलूष : । पुं॰ लताप्रभेदे ॥

फलेग्रहि । पुं॰ यथाकालफलधरे । अवन्ध्यवृक्षे ॥ त्रि॰ फलग्रहणकर्त्त रि ॥ फलानिगृह्णाति । ग्रह॰ । फलेग्रहिरात्मम्भरिश्चेति उपपदस्य एदन्तत्व ग्रहेरिन्प्रत्ययश्चनिपात्य ते ॥

फलेन्द्र । पुं॰ राजजम्ब्वाम् । फरेंदा॰ इ॰भा॰ ॥

फलेपुष्पा । स्त्री॰ द्रोणपुष्प्याम् ॥

फलेप्सु . । त्रि॰ सकामेजने ॥ फलप्रा प्तुमिच्छतीतितथा ॥

फलेरुहा । स्त्री॰ पाटलायाम् । पाट लिवृक्षे ॥ फलेरोहति । इगुपधे- तिरुहे क . । तत्पुरुषेकृतीत्यलु क् ॥

फलोत्तमा । स्त्री॰ काकलीद्राक्षाया म । निर्वीजायाम् । किस्मिस् ॰इ॰ भा॰ ॥

फलोत्पत्ति । पु॰ आम्रवृक्षे ॥

फलोदय . । पु॰ लाभे ॥ त्रिदिवेशा लये ॥ फलस्यउदय . अस्मिन्वा ॥

फल्क . पुं॰ विसारिताङ्गे ॥

फल्गु । स्त्री॰ गयास्थनद्याम् मल य्वाम् । काकोदुम्बरिकावृक्षे ॥ गुला ल॰फाग॰इ॰प्र॰रेणुप्रभेदे ॥ मि- थ्यावाक्ये ॥ त्रि॰तुच्छे । असारे ॥ यथा । तृणमात्रगति लघुजगदेतद् तिफल्गु । धनलोभमपहायनमप- ज्ञनयनाय ॥ फलतिञिफलाविशर ण॰फलनिष्पत्तौवा । फलिपाटीति साधु ॥

फलगुतीर्थम् । न० गयानद्याम् ॥ सार्द्धक्रोशद्वयमान गयायायरिकीर्त्तितम् । पञ्चक्रोशगयाक्षेत्र क्रोशमेकगयाशिरः ॥ तत्रपिण्डप्रदानेन तृप्तिर्भवतिशाश्वती ॥ नागाज्जनार्दनाच्चैवकूपाच्चोत्तरमानसात् ॥ एतद्गयाशिर प्रोक्त फल्गुतीर्थतदुच्यते । तत्रपिण्डप्रदानेनपितॄणापरमागति ॥ पृथिव्यांयानितीर्थानियेसमुद्रा सरांसिच। फल्गुतीर्थंगमिष्य तिवारमेकदिने दिने ॥

फल्गुदा । स्त्री० गयानद्याम् ॥

फल्गुन । पु० अर्जुनपाण्डवे ॥ अर्जुनपादपे॥ फलतिनिष्पादयतिफल० फलेर्गुक्चेत्यन् न० गुगागमश्च ॥ त्रि० फल्गुन्याजाते ॥ श्रविष्ठाफल्गुनीत्यणोलुक्। लुक् तद्धितलुकि ॥

फल्गुनी । स्त्री० नक्षत्रविशेषे । पूर्वफल्गुन्यो ॥ काकोदुम्बरिकायाम ॥ फल्गुन्याजातायाम् ॥ श्रविष्ठाफल्गुनीत्यणोलुकि॰लुक्तद्धितलुकीतिस्त्रीप्रत्ययस्यचलुकि॰ फल्गुन्यषाढाभिरिति ॥ टित्वान् ङीप् ॥

फल्गुवाटिका । स्त्री० काकोदुम्बरिकायाम् ॥

फल्गुवृन्तक । पु० श्योनाकप्रभेदे ॥

फल्गूत्सव । पु० दोलयात्रायाम् ॥

फल्यम् । न० कुसुमे ॥

फल्यकी । स्त्री० फलिमत्स्ये ॥

फल्लफल । पु० सूर्पजवाते ॥

फा. । पु० वृद्धौ ॥ वर्द्धके ॥ सन्तापे ॥ निष्फलभाषणे ॥

फाटकी । स्त्री०स्फटिकायाम् । फ[illegible] री इ० भा० ॥

फाणि । स्त्री० गुडे ॥ करभे ॥

फाणितम् । न० मत्स्यण्डयाम् । राव ० इ० भा० यथा । इक्षोरसस्तुय पक्व किञ्चिद्गाढोबहुद्रव । सए वेक्षुविकारेषुख्यात फाणितसञ्ज्ञया ॥ फाणितगुर्वभिष्यन्दिबृंहण कफशुक्रकृत् । वातपित्तश्रमान्हन्ति मूत्रवस्तिविशोधनम् ॥ फण्यते । फाणगतौ । क्त ॥

फाण्ट । त्रि० अनायासकृते ॥ पु० न० कषायविशेषे ॥ क्षुण्णमौषधजातमुष्णोदकेप्रक्षिप्य सद्योभिषुत्यपूत्वायत्पीयतेतत्फाण्टमित्याहु ॥ यथा । क्षिप्त्वोष्णतोयेमृदित फाण्टइत्यभिधीयते ॥ अपिच । क्षुद्रव्यपलेसम्यकजलमुष्ण विनि क्षिपेत् पात्रेचतुष्पलमितेततस्तुस्रावयेज्जलम् ॥ सोयंचूर्णद्रव : फाण्टोभिषग्भिरभिधीयते ॥ इति वै० प० ॥ फण्यतेस्म । फण० । क्त । क्षुब्धस्वान्तेतिसाधु ॥ नवनीतभावात्प्रागवस्थापन्ने द्रव्ये ॥

फाल । पुं० महादेवे ॥ बलदेवे ॥ उत्प्लुतौ ॥ पुं० न० कृषिके । सीरोपकरणे ॥ नवविधदिव्यान्तर्गताष्टमदिव्ये ॥ यथा । आयसन्द्वादशपलघटितफालमुच्यते । अष्टाङ्गुलभवेद्दीर्घं चतुरङ्गुलविस्तरम् ॥ अग्निवर्णततश्चौरोजिह्वयालेहयेत्सकृत् । नदग्धश्चेच्छुद्धिमियादन्यथातुसहीयते ॥ चौरोऽत्रगोचौर । गो-चौरस्यप्रदातव्य तप्तफालावलेहनमिति स्मृतिः ॥ त्रि० कर्पासवाससि ॥ फालयति । त्रिफला० । खयन्तात्० पचाद्यच् फलस्यविकार । तस्यविकारइत्यण् ॥

फालकृष्ट । पुं० हले ॥

फाल्गुन । पुं० गुडाकेशे । पार्थे । अर्जुने ॥ नदीजवृक्षे ॥ अर्जुनभूरुहे ॥ तपस्ये० मासि । फागन० इं० भा० ॥ तत्रजातस्यफलम् । प्रियवद : सज्जनवल्लभश्चपरोपकारीविमलाशयश्च । दातानितान्तं प्रमदाभिलाषीस्यात्फाल्गुनेयस्यजनस्यजन्म । अनन्तपुरे ॥ फलतिनिष्पादयति । फल० । फलेर्गुक्चेतिउनन् । गुगागमश्च । तत प्रज्ञाद्यण् ॥ यद्वा । फाल्गुनीपौर्णमास्यस्मिन् विभाषाफाल्गुनीतिपक्षे०अण् ॥

फाल्गुनानुज : । पुं० सुरभौ । वसन्तकाले ॥ अर्जुनस्यकनिष्ठभ्रातरि ॥

फाल्गुनिक । पुं० तपस्यमासि । फाल्गुने ॥ फाल्गुनीपौर्णमास्यस्मिन् । विभाषाफाल्गुनीश्रवणाकार्तिकीचैत्रीभ्य इतिठक् । ठस्येकः ॥

फाल्गुनी । स्त्री० तपस्यपूर्णिमायाम् ।। अत्रगौडदेशीयादोलायात्राकुर्वन्ति । नरोदोलागतदृष्ट्वागोविन्दं पुरुषोत्तमम् । फाल्गुन्यासयतोभूत्वा गोविन्दस्यपुरव्रजेत् ॥ अपिच । फाल्गुन्याक्रीडनंकुर्याद्दोलायांममभूपते इति ॥ पूर्वफाल्गुन्याम ॥ उत्तरफाल्गुन्याम ॥ फल्गुनीभिर्युक्तापौर्णमासी ॥ नक्षत्रेणयुक्तः काल इत्यण् । ततोङीप ॥

फि । पुं० पापे । निष्फलवाक्ये ॥ कोपे ॥

फिङ्गक । पुं० कलिङ्गे । भृङ्गे । भूम्याटविहगे । फिङ्गा० इं०गी० भा० प्र० खगे ॥

फिरङ्ग : । पुं० रोगान्तरे ॥ द्वीपान्तरे कद्वीपविशेषे ॥ तत्रत्यजने ॥ यथा । पूर्वाम्नायेनवशतषडशीति प्रकीर्तिता: । फिरङ्गभाषयामन्त्रा तेषांससाधनात्कलौ ॥ अधिपामण्डलानाञ्चसङ्ग्रामेष्वपराजिता । इङ्गरेजानवषट् पञ्चलण्ड्राजाश्चापि भाविन । इतिमेरुतन्त्रे २३ प्रकाश : ॥

फु : । पुं० मन्त्रके ॥ तुच्छवाक्ये ॥

फुक्क । पुं॰ पक्षिणि ॥
फुट । त्रि॰ सर्पफणायाम ॥
फुत् । अ॰ अनुकरणशब्दे ॥
फुत्कर । पुं॰ अग्नौ ॥
फुत्कार पु॰ फुत्करणे । फूत्का॰ द्र॰ भा॰ ॥
फुत्कृति । स्त्री॰ फूत्कारे ॥
फुप्फुस । पुं॰ पुप्फुसे । कोष्ठविशेषे ॥ सच हृदयनाडिकासलग्नाशयविशेष । फोंपडा॰ भस्॰ द्र॰ भा॰ ॥ यथा । स्थानान्यामाग्निपक्वानामूत्रस्य रुधिरस्यच । हृदुण्डकफुप्फुसश्चकोष्ठइत्यभिधीयते ॥ अ स्यार्थं । आमस्यस्थानमामाशयो नाभेरूर्द्धम् । अग्ने . स्थानपच्यमानाशयोनाभिमध्यम् । पक्वस्यस्थान पक्वाशयोनाभेरध । मूत्रस्यस्थान वस्ति । रुधिरस्यस्थानयकृत्प्लीहानौ हृत्हृदय । हृद्भुरसपाकमलवद्य शोणितमलसञ्ज्ञ उण्डुक सचान्त्रदेशेव्यवस्थित . पुरीषाधानम् । फुप्फुस हृदयस्यवामपार्श्वे फुप्फुण्ड इतिख्यातइतिविजय रचित ॥
फुल्ति । स्त्री॰ फलने ॥
फुल्ल : । त्रि॰ विकसिते ॥ पुष्पे ॥ यथा । श्रीपञ्चम्याश्रियदेवींफुल्लै सम्पूजयेत्सदा ॥ फलति । त्रिफला । ञीतः क्त . । आदितश्चेतीडभाव । तिचेत्युत्वम् । अनुपसर्गात् फुल्लक्षीवेति॰ तस्यल ॥
फुल्लदाम । न॰ छन्दोभेदे ॥ यथा । मोगौनौतौगौ॰ शरहयतुरगै . फुल्लदामप्रसिद्धम् ॥ यथोदाहरणम् । शश्वल्लोकानांप्रकटितकदमनध्वस्तमालोक्यकसहृष्यच्चेतोभिश्चिद्विवसतिभिर्व्योमसस्थैर्विमुक्ताम् । मुग्धामोदैनस्थगितदशदिशाभोगमाक्रुतभृङ्ग मौलौदैत्यारेर्न्यपतदनुपमंस्वस्तरो फुल्लदाम ॥ पुष्पमालायाम् ॥
फुल्लदृक् । त्रि॰ विकसितनयने ॥
फुल्लफाल : । पुं॰ शूर्पवाते ॥ द्र॰ त्रिशेष ॥
फुललोचन । त्रि॰ विकसितनेत्रवति ॥
फुल्लीक । पुं॰ देशे ॥ सर्पे ॥
फूत्कार . । पु॰ श्वासनिर्गमे । श्वसिते ॥ फूत्कारणम् । कृञ्॰ । घञ् ॥
फेत्कारिणी । स्त्री॰ तन्त्रविशेषे ॥
फेन । पु॰ डिण्डीरे । अब्धिकफे । समुद्रफेने ॥ तरलद्रव्योपर्युत्थितवुद्बुदाकारवस्तुनि । फ्राग॰ द्र॰ भा॰ ॥ स्फायते । स्फायी॰ फेनमीनावितिनिपातनात्साधु ॥
फेनक । पु॰ फेने ॥ पिष्टविशेषे ॥
फेनका । स्त्री॰ जलपक्वतण्डुलचूर्णे ।
फेनदुग्धा । स्त्री॰ दुग्धफेनीक्षुपे ॥
फेनल : । त्रि॰ फेनवति । फेनिले ॥

फेनोस्यास्मिन्नस्ति । फेनादिल-
च्चेतिचकाराल्लच् ।
फेनवान् । त्रि० फेनले ॥ फेनोस्यास्मि
न्नस्ति । फेनादिलच्चेत्यत्रान्यतर
स्यामित्यनुवृत्ते पक्षेमतुप् ॥
फेना । स्त्री० क्षुपविशेषे । सातलाया
म् ॥
फेनाग्रम् । न० बुद्बुदे ॥
फेनायमान । त्रि० फेनमुद्वमति ॥
फेनाच्चेतिवक्तव्यमितिक्यङ् ॥
फेनवाही । पु० वस्त्रे ॥
फेनाशनि । पु० इन्द्रे ॥
फेनिका । स्त्री० पक्वान्नविशेषे । फेनी
इ० भा० ॥ यथा समितायाघृता
ढ्यायाबर्त्तीर्दीर्घां समाचरेत् । ता
सुसन्निहितादीर्घा पीठस्योपरिधार
येत् ॥ वेल्लयेद्वलनेनेतायथैकापर्प्प-
टीभवेत् । ततश्छुरिकयातान्तुसल
म्नामेवकर्त्तयेत् ॥ ततस्तुवेल्लयेद्भूय
श्चङ्कनेनपक्षेपयेत् ततः सवृतता
लोम्नीविदधीतपृथक्पृथक् ॥ पुन-
स्तांवेल्लयेल्लोम्नीयथास्यान्मण्डलाकृ-
तिः । ततस्तांसुपचेदाज्ये भवेयुश्च
पुटा स्फुटा ॥ सुगन्धयाशर्करया
तदुद्धूलनमाचरेत् । मिश्रं षाफेनि
कानाम्नीमठकेनसमाशुषे ॥ तत
किञ्चिल्लघुरियम्विशेषोयमुदाहृतः ॥
फेनिल । अरिष्टभूरुहे । रीठा० इ०
भा० ॥ बदरवृक्षे ॥ न० मदनफले
॥ बदरफले ॥ त्रि० सफेने ॥ फे
नोऽस्यास्ति । फेनादिलच्चेतिइ
लच ॥
फेर । पुं० शृगाले ॥
फेरण्ड । पु० शृगाले ॥
फेरव । पु० शृगाले । असुरे । रा-
क्षसे ॥ फे० इति० अव्यक्तोरवोऽस्य
॥ त्रि० धूर्त्ते ॥ हिंस्रे ॥
फेरु । पुं० जम्बुके । शृगाले । फे०
इत्यव्यक्तं रौति रुशब्दे । मितद्रा
दित्वात्० डुः ॥
फेलम् । न० [illegible] भुक्तसमुज्झि
फेलक पु० [illegible] ते । उच्छि
ष्टे ॥
फेला । स्त्री० भुक्तोज्झिते ॥ फेल्यते ।
फेलृगतौ । गुरोश्चेत्य ।
फेलि । [illegible] भुक्तोज्झिते ।
फेलिका । स्त्री० [illegible] उच्छिष्टे । अ
फेली । [illegible] ट० । इ० भा०

—।०(—)०।—

बवयोरैक्यमभेददर्शनात् ॥
व: । पु० पवर्गस्यतृतीयाक्षरे ॥ वरु
णे ॥ सिन्धौ ॥ भगे ॥ तोये ॥
वदने ॥
वंहिमा । पु० बहुलतायाम् ॥ बहुल
स्यभाव । पृथ्वादित्वादिमनिच् ।
प्रियस्थिरेतिबहुलस्यवंहिआदेश ।
वहिष्ठ । त्रि० अत्यन्तबहुले ॥ अयमे
षामतिशयेनबहुल: । अतिशायने

तमविष्ठनावितीष्ठन् । प्रियस्थिरेति वह्निद्यादेश ॥

वह्नीयान् त्रि० वह्नुलतरे । अयम नयोरतिशयेनवह्नुल . । द्विवचन विभज्योपपदेतरबीयसुनावितीयसु निप्रियस्थिरेतिवह्न्यादेश . ॥

बक पु० कह्ने । बगला० हु० प्र० पक्षिणि ॥ अस्यमांसगुणास्तु । शरा रिवकबाकाश्च दाल्यूहा . पवना- पहा . ॥ हु० ॥ बकपुष्पे । शिव मल्ल्याम् । अगस्तिद्रुमे । यथा । सितपीतनीललोहितकुसुमभेदाच्च तुर्विधोऽगस्ति . । मधुरशिशिरदो षभ्रमकासविनाशनसम्भूतद्ध । तथाचराजनिर्घण्ट । अगस्तिशि शिरगौल्य चिदोषघ्नश्रमापहम् । बलासकासवैवर्ण्यभूतघ्नञ्चबलावह मिति ॥ श्रीदे । कुबेरे ॥ रक्षोविशे षे । योभीमेनहत । असुरविशेषे ॥ सचश्रीकृष्णे नहत ॥ वह्नते । व- किकौटिल्ये गतौच । अच् । आग मशास्त्रस्यानित्यत्वान्ननुम् । बवयो रैक्यम् ॥ यद्वा वाति । वायतिवा । वागतिगन्धनयो । ओवैशोषणेवा क्षुन् । आतोलोप . ॥ वेति० वा- यतिवा । मूलविभुजादित्वात्क . । वक्तिवा । वचेरच् । न्यङ्क्वादि . ॥

बकचिञ्चिका । स्त्री० मत्स्यविशेषे० । बकाच्यायाम् ॥

बकजित् । पुं० भीमसेने ॥ श्रीकृष्णे ॥

बकनिसूदन । पुं० श्रीकृष्णे ॥ भीमसेने ॥

बकपुष्प । पु० बकवृक्षे ॥ न० अग स्तिकुसुमे ॥

बकवृत्ति । पु० बकसमानवृत्तिनवि शिष्टे यथा । पाषण्डिनोविकर्म- स्थान्वैडालव्रतिकान्शठान् । हैतु कान्बकवृत्तींश्चवाङ्मात्रेणापिना- र्चयेत् ॥

बकवरी । पु० श्रीकृष्णे ॥ भीमसेने ॥

बकव्रतचर । पु० बकव्रतिनि ॥ बक व्रतचरतीति० तथा । चरेष्ट । बकोहिप्रायेणमीनहननरुचितयामि थ्याविनीत . सन्नवशीलोभवतीति गौणोबकव्रतशब्द तल्लक्षणन्तु । अधोदृष्टिर्नैष्कृतिक स्वार्थसाधनत त्पर । शठोमिथ्याविनीतश्चबकव्र तचरोद्विज ॥ हु० ॥

बकव्रती । पु० बकव्रतचरे । बकव्रत वति ॥

बकाची । स्त्री० बकचिञ्चिकायाम् ॥

बकारि । पुं० श्रीकृष्णे ॥

बकुल । पुं० शीधुगन्धे । सिंहकेशरे । मौलसरीति० प्र० वृक्षे ॥ बङ्कते बकिगत्यर्थे । वा० उलच् । आगम शास्त्रस्यानित्यत्वान्ननुम् । बकुलस्तु वरोऽनुष्णा कटुपाकरसोगुरु . । कफपित्तविषश्विचक्रमिदन्तगदाप-

ह : ॥ पण्यवम् ॥

वकुला । स्त्री० कटुकायाम् ॥

बकुली । स्त्री० काकोल्याम् ॥

बकूल । पुं० बकुले ॥

बकेरुका । स्त्री० बलाकाभिदि ॥ वा
ताविञ्जितशाखायाम् ॥

बकोट । पुं० शुक्लवायसे । बके ॥

बठर : । पु० अम्बष्ठे शठे ॥

वणिग्बन्धु : । पुं० नीलीवृक्षे ॥

वणिग्भाव । पुं० सत्यानृते । वाणि
ज्ये ॥ वणिजोभाव । ष्यञ् ॥

वणिग्वह । पु० उष्ट्रे ॥

वणिक्ग् । पुं० वाणिजके । वाणिज्य
कर्त्तरि । क्रयविक्रयकर्त्तरि । वेदे
हके सार्थवाहे । नैगमे । क्रयवि
क्रयके । वाणिज्ये ॥ करणान्तरे ॥
पञ्चले पण० । ? वेरिज्यादिश्च ॥
हैश्ये ॥

वणिद् । स्त्री० वणिज्यायाम् ॥

वणिज । पु० ववाद्येकादशकर्णान्त
र्गतषष्ठकरणे । तज्जातफलयथा ।
प्राज्ञ कृतज्ञोगुणवान्गुणज्ञोवणि
ग्जनप्राप्तमनोरथ स्यात् । यस्यप्र
सूतौवणिजाभिधानभाख्डप्रधानद्र
विणाहितस्येति ॥ बणिजि ॥

वणिज्यम् । न० वाणिज्ये । ग्रन्थान्तरे॥
वणिजांकर्मभावोवा । दूतवणिग्
भ्याञ्चेति० य । दूतिकात्मिका ।
भाष्ये तु०दूतवणिग्भ्याञ्चेतिनास्त्ये

व ।

वणिज्या । स्त्री० वाणिज्ये ॥ ग्रन्थान्तरे
वणिजाभाव । दूतवणिग्भ्याञ्चेति
य. वणिज्याशब्द स्वभावात्स्त्री-
लिङ्ग ० भावएवायप्रत्ययोनतुक-
र्मणीतिमाधव । भाष्ये तुवार्त्तिकमे
वनास्ति ॥ वणिक्कर्मणि ॥

वण्ठ । पु० असहायगमने ॥ अकृ
तोद्वाहे ॥ खर्वे ॥ कुन्तायुधे ॥ भृत्ये
। वांठ० ह० भा० ॥ वण्ठते । वठि
। अच् ॥

वण्ड : । त्रि० विकृतलाङ्गूले ॥ बॉडा
ह० भा० ॥

वदर । पु० कोलिपादपे ॥ बदरस्य
पचलेपोज्वरदाहविनाशन । त्वचा
विस्फोटशमनीबीजनेत्रामयापहम्
॥ वदतिस्थिरीभवति०छिन्नस्यापिपु
न : प्ररोहणात् । बदस्थैर्ये । वा०
अर ॥ देवसर्षपवृक्षे ॥ कार्पासस्या
स्थ्नि । बिनौला० कपासिया०वाड
वा० ह०भा० ॥ न० कोलिफले ॥
कार्पासीफले ॥ वदर्या फलम् ।
फलेलु गतिविकाराश्रयवप्रत्ययस्यलु
क ॥ लुक्तद्धितलुकीति० स्त्रीप्रत्य
यस्यलुक् ॥ सेबिफले ॥ क्षुद्रबदरे ।
झाडीबेर ह० झडबेरी० ह० भा०
॥ गोपगोष्ठ्याम् ॥ वदरमात्रे ।
कर्कन्धौ । बदर्याम् ॥

बदरफली । स्त्री० भूबदर्याम् ॥

बदरवल्ली । स्त्री० ) भूबदर्याम् ॥
बदरा । स्त्री० गृष्टी । वराहकान्तायामोषधौ ॥ कार्पास्याम् ॥ एलापर्ण्याम् ॥ विष्णुक्रान्तायाम् ॥ टाप् ॥
बदरामलकम् । न० प्राचीनामलके ॥
बदरि । स्त्री० कोलिवृक्षे ॥
बदरिकम् । न० तीर्थविशेषे ॥
बदरिकाश्रम । पुं० न०तीर्थविशेषे । नारायणाश्रमे । व्यासाश्रमे ॥
बदरी । स्त्री० कोलवृक्षे ॥ कपिकच्छ्वाम् ॥ कार्पास्याम् ॥ गौरादित्त्वान्ङीष ॥ बदरीफले ॥ बदर्या फलम् हरीतक्यादिभ्यश्चेति० विकारार्थस्य लुप् ॥
बदरीखण्ड । पु० बदरीणां समूहे ॥ वृक्षादिभ्य खण्ड ॥
बदरीच्छदा स्त्री० शङ्खनख्याम् ॥ हस्तिकोलिवृक्षे ॥
बदरीपत्रकम् । न० नखीनामगन्ध द्रव्ये ॥
बदरीपाचनम् । न० तीर्थविशेषे ॥ तत्रवशिष्ठाश्रम ॥
बदरीफला । स्त्री० नीलशेफालिकायाम् ॥
बदरीशैल ' । पुं० अलकनन्दायां ' पश्चिमतीरेहिमाचलैकदेशे ॥
बदरीषण्ड : पुं० बदरीखण्डे ॥ बदरीणांषण्ड समूह ॥

बदर्याश्रम । पु० नारायणाश्रमे ॥
बद्ध । त्रि० कीलिते । संयते । कारागारादौनिगडिते ॥ बध्यते स्म । वधबन्धने । क्त ॥ मोक्षाद्यावृते० सुखदुःखादिधर्मवति० पाशाष्टकेनयन्त्रितेससारिजीवेपशौ॥
बद्धगुदम् । न० उदरामयविशेषे । तन्निदानं यथा । यस्यान्त्रमन्नैरुपलेपिभिर्वाबालाश्मभिर्वापिहित यथावत् । सञ्चीयते तस्यमल ' सदोषात् शनै शनै सङ्करवच्चनाड्याम् ॥ निरुध्यते तस्यगुदेपुरीष निरेतिकृच्छ्रादपिचाल्पमल्पम् । हृन्नाभिमध्ये परिवृद्धिमेति तस्योदरबद्ध गुदं वदन्ति ॥
बद्धफल । पु० करञ्जवृक्षे ॥
बद्धमुष्टि । त्रि० कृपणे ॥
बद्धमूल ' । त्रि० दृढमूले । उत्पाटनानर्हमूले । बद्धोमूलोयस्य स ॥
बद्धमौन । त्रि० नि शब्दे ॥
बद्धरसाल । पु० त्रिविधराजाम्रान्तर्गताम्रे ॥ समासे । मध्वाम्रे । मन्मथानन्दे ॥
बद्धशिख ' त्रि० शिशौ । वाले ॥ स यतचूडेनरे ॥ यथा । सदोपवीतिनाभाव्यं सदाबद्धशिखेनतु । विशिखोव्युपवीतश्चयत्करोतिन तत्कृतमिति ॥ बद्धाशिखायस्य ॥

बद्धशिखा । स्त्री० उच्चटौषधौ ॥

बध । पु० प्राणवियोगफलकव्यापारे । प्रमापणे । मारणे । हननम । हन० । हनश्चबधश्चत्यप् ॥ पुण्यप्रद बधस्तुयथा । एकस्ययचनिधनेप्रहृ त्ते दुष्टकारिणाम । बहूनांभवति क्षेम तस्यपुण्यप्रदोबध ॥ एकस्त्री सुरापश्चब्रह्महागुरुतल्पग । आत्मान घातयेद्यस्तुतस्यपुण्यप्रदो बध ॥ इति ॥ अपिच, नैकस्यार्थे बहून्हन्यादितिशास्त्रेषुनिश्चय एक हन्याद्बहूनाहिनपापीतेन जायते ॥ इति वामनपुराणे ५५ अध्याय । पारिभाषिकबधस्तु । बधन द्रविणादान स्थानान्निर्यापण तथा । एषहिब्रह्मबन्धूनावधोनान्यो स्तिदैहिक ॥ इ० ॥ करचरणा दिच्छेदनादिरूपेताडने ॥ सप्तम तारायाम् ॥

बधक पुं० व्याधे । मृत्यौ ॥ बध कर्त्तरि । बद्धक० इ० भा० ॥ त्रि० हिंस्रे ॥ हन्ति । हन० । ण्वुल् । बहुल तणीतिबवुलिबधा देश ॥ बधहिसायावा । तदा० जनिबध्योश्चेतिवृद्धिनिषेध ॥

बधत्रम् । न० आयुधे ॥ बध्यतेऽनेन । बध० । असिनसियजिबधिपति भ्योऽत्रन् ॥

बधस्थली । स्त्री० बधस्थाने ॥

बधस्थानम् । न० आघातने । सूनायाम् ॥ बधस्थस्थानम् ॥

बधाङ्ककम् । न० कारावेश्मनि ॥

बधार्ह । त्रि० हननयोग्ये ॥ बध्ये ॥

बधी । त्रि० बधकर्त्तरि ॥

बधिर । त्रि० एडे । श्रवणशक्तिहीने बहरा० इ० भा० ॥ बाधिर्यनिदानन्तु । यदाशब्दवह वायु स्रोतआवृत्यतिष्ठति । शुद्धश्श्लेष्मान्वितोवापिबाधिर्यन्तेनजायते ॥ औषध यथा० । कर्णशूलेकर्णनादेबाधिर्येक्ष्वेडएवच । चतुर्ष्वपिचरोगेषुसामान्यभेषजस्मृतम् ॥ शृङ्गवेरञ्च मधुचसैन्धवतैलमेवच । कदुष्णकर्णयोर्धार्यमेतत्स्याद्वेदनापहम् ॥ इ० ॥ बाधिर्यबालवृद्धोत्थचिरोत्थञ्चविवर्ज्जयेत् । बध्नाति कर्णम् । बध्यतेवा बन्धबन्धने । इषिमदिमुदीतिकिरच् ॥ भिक्षु कल्लक्षणे ॥ हितमितमनोरम्य वच शोकापहञ्चयत् । श्रुत्वायोनशृणोतीत्रबधिर . सप्रकीर्त्तित . ।

बधोद्यत । त्रि० परबधायोद्युक्ते । सन्नद्धे । आततायिनि ॥

बध्य । त्रि० बधार्हे । शीर्षच्छेद्ये ॥ किन्त्वयानश्रुतलोकेअबध्या शत्रुयोषित । हीनवर्णोपभुक्तायात्याज्या

बध्यापिवाभवेत् ॥ अवध्याःयथा । गोब्राह्मणाङ्गनमथापिसुप्तं बालस्वबन्धुललनासुदुष्टाम् । कृतापराधानपिनैवबध्याचार्यमुख्यादगुरवस्तथैवेति ॥

बध्यपाल . । पुं० कारागृहरक्षके ॥

बध्रम् । न० नागे । सीसके सीसा० इ०भा० ॥ बध्यतेऽग्निन । सर्वधातुभ्य ष्ट्रन् ॥

बध्री । स्त्री० वध्रीम् । वरत्राय.म । चर्मरज्जौ । वरत० ताव० इ० भा० ॥ बध्यतेऽनया । ष्ट्रन षित्वान्ङीष्

बन्ध । पुं० आदौ ॥ बन्धने ॥ अन्तकरणाश्रुविरूपिज्ञानप्रतिबन्धे । कर्तृत्त्वाद्यभिमाने ॥ विपर्ययाद्दिष्यते बन्ध । विपर्ययात्०अतत्त्वज्ञानात् सच०प्राकृतिकवैकारिकदाक्षिणिकभेदात्त्रिविधउक्तास्त च्छन्दव्याख्यानतोऽवगन्तव्य' ॥ पुनर्बन्धोद्विविध । तीव्रोमृदुश्चेति । तत्रसुरसम्पत्० साक्षादेवकर्मबहेतुत्त्वात्तीव्रोवन्ध । द्वैतमात्रप्रतीतिस्तुक्षयमकर्मबरूपत्वाच्चमृदुबन्धइति ॥ वध्यतेऽनेनवा । बन्ध० । हलश्चेतिघञ् ॥ गृहादिवेष्टने ॥ शरीरे ॥ निगडादिबन्धने ॥ अनेकान्तवादिसतेतु० नानानिरयससरणकारण मोहादिरष्टविधोग च स्वातन्त्र्यविघातहेतुत्वाद्बन्ध । उक्तञ्च । मोहादिकोगणश्चबबन्धो जीवस्यकल्पित । लोहपञ्जरसम्बद्ध यथाविप्र जलाशये । अलाबुकमधोयातितद्वज्जीव सबधनइति ॥ जालधरोड्डीयनमूलबधान्जल्पन्ति कण्ठोदरपायुमूले । बधत्रयेऽस्मिन् परिचीनमानेबध . कुतोदारुणकालपाशे ॥ इतियोगविद ॥ षोडशप्रकारैरतिबधे ॥ तेयथा । पद्मासनोनागपदोलताविष्टोऽर्धसपुट । कुलिशसुन्दरश्चैवतथाकेशरएवच हिल्लोलीनरसिंहो पिविपरीतस्तथापर । क्षुब्धोवैधेनुकश्चैवसमुत्कण्ठस्तत परम् ॥ सिंहासनोरतिनागोविद्याधरस्तुषोडश इतिरतिमञ्जरी । एतेषालक्षणानितत्तच्छब्दे द्रष्टव्यानि ॥ सञ्ज्ञाप्रभेदेनान्येऽपिबधा सन्ति । यथा कामप्रदोविपरीतोनागरोरतिपाशक । केयूरःप्रियतोषश्चतत समगदस्तथा । ततश्चैकपदोच्चेय सम्पुटश्चोर्ध्वसम्पुट । ततस्तनभवश्चैवततोनुरतिसुन्दर ॥ ऊरुपीडस्मरचक्रौततश्चोरुक्रम स्मृत । वेष्टकोहसकीलस्तुततोलीलासनस्तथा ॥ अष्टादशक्रमाद्बधा स्त्रीणाबहुसुखप्रदा ॥ पुंसाकाराश्चैवकथितास्तुक्रमात्तत ॥

बधक । पु० विनिमये ॥ आधौ ॥ रतहिण्डके ॥ सत्यङ्कारे ॥ न० आधौ । यदुत्तमर्णायभूम्याद्याधीयतेतत ॥

त्यागग्रहणायस्यापितिवस्तुनि ॥ बध्नाति । बध० । खुल् ॥

बधकी । स्त्री० पुश्चल्याम् ॥ हस्तिन्याम् बध्नातिमनोयत्र । बधबधने ॥ खुल् । गौ० ङीष् ॥ पञ्चपुरुषगामिन्याम् ॥

बधनम् । न० बधे ।, बधनक्रियायाम् । । उद्दाने । बधे । बाधना० हू० भा० ॥ निमित्त ॥ यथा । नप्रकाशेह मित्युक्तिर्यत्प्रकाशैकबधना । स्वप्रकाश तमात्मानमप्रकाश : कथस्पृशेत् ॥ अहनप्रकाशे० नभामीत्युक्तिर्वचन० यत्प्रकाशैकबधना० यस्प्रकाशस्वरूप प्रकाशएकएवबधन निमित्तंयस्या सातथोक्ता ॥ नप्रकाशइतिव्यवहारस्प्रकाशानुभव निमित्तत्वादित्यर्थ । तप्रकाशस्वयमेवभासमानमात्मानमप्रकाशोऽज्ञानंकथस्पृशेत् आवृणुयात्नकथचिदित्यर्थ . ॥ चि० प्रसित्याम् । बधनसाधनेरज्जु निगडादौ ॥ यथा । बधनानिकिलसन्तिबहूनिप्रेमरज्जु कृतबधनम् मन्यत् । दारुभेदनिपुणोपिषडङ्घ्रिर्निष्क्रियोभवतिपङ्कजबद्धति ॥ बध्यतेऽनेनास्मिन्वा । बध० । ल्युट् ॥

बंधनवेश्म । न० कारागारे ॥

बंधनालय : । पुं० कारायाम् । बंधनागारे ॥ बधनस्यआलय : ॥

बधस्तम्भ . । पु० आलाने । हस्तिबधनस्तम्भे ॥ बधस्यबंधनस्यस्तम्भ ॥

बधित्रम् । न० कामदेवे ॥ चर्मव्यजने ॥

बधु । पु० बधूके । बधुजीवके ॥ मित्रे । सम्ध्यागासहने । भ्रातरि ॥ सगोत्रे । बान्धवे । ज्ञातौ ॥ हितकारिणि ॥ ससारबधनान्मोचनहेतुरात्मैवबन्धुर्नान्य . ॥ सम्बन्धेनोपकर्त्तरि ॥ बध्नातिमनोहेनमनोय बध्यतेऽस्मिन्जातिरितिवा । बध० । शृस्वृस्निहीत्यु . ॥ लग्नाच्चतुर्थभवने वर्णवृत्तान्तरे ॥ भवयशोभितसङ्गतकर्ण्णे शुद्धसुसङ्गतपङ्क्तिकवर्णे । पन्नगराजनिवेदितबन्धु राजतिभूपतिससदिबन्धु . ॥ यथा । भञ्चितवासरनायकचन्द्र ' कामिसमूहसमाहिततन्द्र । दर्शिंतलोलतडित्करवाल . सोयमुपैतिघनाघनकाल : ॥

बधुजीव । पु० बधूकवृक्षे । माध्याह्निके । दुपहरिया० फूल० हू० भा० ॥ बंधुरिवजीवजलमस्य ॥

बधुजीवक . । पु० बधूके ॥ स्वा०क

बधुता । स्त्री० बधुसङ्घे ॥ बधूनासमूह : । ग्रामजनबधुभ्यस्तल् ॥

बधुर . । पुं० स्त्रौचिह्ने ॥ तैलकल्के ॥ बधूके ॥ वधिरे ॥ हंसे ॥ विडङ्गे ॥ ऋषभौषधौ ॥ न० मुकुटे ॥ बंधने ॥

॥ त्रि० उन्नतानते ॥ रम्ये ॥ नम्रे ॥ वध्नाति । बध० । मद्गुरादयश्चे तिसाधु ॥

वधुरा । पुं० भूमि०सनुषु ॥

वधुरा । स्त्री० पण्ययोषायाम् ॥

वधुल : । पुं० असतीपुत्रे ॥ वधून्लाति । आतश्चेत्यिक : ॥ त्रि० नम्रे ॥ सुन्दरे ॥

वधूक । पुं० पीतसालके । सर्जके । प्रियके । विजयसार०इ०भा० ॥ पेयासाल०इ०गौ०भा० ॥ न० पुष्पद्रुचवि० । रक्तके । वधुजीवके । दोपहरिया०मझनिया० इ० भा० ॥ बाँदुली० इ० गौ० भा० ॥ वधूक ' कफद्द्ग्राहीवातपित्तहरो लघु : ॥ वध्नातिचित्तम् । वध० । उलूकादयश्चेत्यूक । ॥ खधूपे । बन्धूक०इ०भा० । यथा । बधूकोवधुजीवेस्यात्खधूपेस्यान्नपुंसकमितिहट्टचन्द्र ' ॥

वन्धूकपुष्प : । पुं० पीतसाले । जीवकतरौ । विजयसार० इ० भा० ॥ वन्धूकस्येवपुष्पाण्यस्य ॥ वीजके ॥

वधूर । पु० विवरे ॥ त्रि० शोभने ॥ नम्रे ॥ वध्नाति । बध० । खजूरादित्वादूर : ॥ उन्नतानते ॥ वधूरवधुरौरम्येनम्रेहसेतुवधुरश्चतिरभस । ॥

वन्ध्य ' । त्रि० अफले । अवकेशिनि । निष्फले । ऋतुप्राप्तावपिफलरहिते वृक्षादौ ॥ बधेसाधु : । तत्रसाधुरितियत् ॥ वधनीये ॥

वन्ध्या । स्त्री० अप्रजस्त्रियाम् । बांझइ० भा० ॥ अपत्यशून्यायांगवि । वशायाम् ॥ वृषलीविशेषे ॥ यथा । वन्ध्याचवृषलीज्ञेयावृषलीचमृतप्रजा । अपराष्टषलीज्ञेयाकुमारीयारजस्वला ॥ वलाख्यगधद्रव्ये । बाभ्यालके ॥ वध्नाति । बध० । ण्यत् । अघ्न्यादित्वाद्यग्वा ॥ योनिरोगविशेषे ॥

वन्ध्याकन्द : । पुं० वन्ध्याकर्कोटक्याम् । बाझखखसा० इ० भा० ॥

वन्ध्याकर्कोटकी । स्त्री० विषकण्टकिन्यामोषधौ । ककोडी०खखसा० इ० भा० ॥ वन्ध्याकर्कोटकीलध्वीकफनुद्व्रणशोधनी । सर्पसर्पहरीतीक्ष्णाविसर्पविषहारिणी ॥

वभस : । त्रि० भक्षणशीले ॥

वभ्रु ' । पु० वैश्वानरे । अग्नौ ॥ शूलपाणौ । शिवे ॥ गरुडध्वजे । विष्णौ । विशाले ॥ नकुले ' स्थूलपुच्छोरक्तनेत्रोवभ्रुर्भेद : सनाकुल ' ॥ मुनिभेदे । देशभेदे ॥ यादवविशेषे । सितावरशाके ॥ त्रि० पिङ्गले । पिङ्गलवर्णवति ॥ विभर्ति० भरतिवा । डुभृञ्० भृञ्०वा । कुर्भ्रश्चेति०कुर्द्वित्वञ्च ॥ खलती ॥

वभ्रुज : । पुं० ब्राह्मणे ॥

बभ्रुधातुः । पुं० सुवर्णगैरिके ॥
वरः । पुं० जामातरि ॥ व्रती ॥ देवतादेरभीप्सिते ॥ षिङ्गे ॥ न० कुङ्कुमे ॥ त्वचे ॥ वालके ॥ आर्द्रके ॥ ईषदिष्टे ॥ मनागिष्टे वरक्लीवे केचिदाहुस्तदव्ययम् ॥ त्रि० । श्रेष्ठे ॥
वरा । स्त्री० फलत्रिके ॥ गुडूच्याम् ॥ मेदायाम् ॥ ब्राह्म्याम् ॥ विडङ्गे ॥ पाठायाम् ॥ हरिद्रायाम् ॥
वरी । स्त्री० शतावर्याम् ॥
वलापक्षः । पुं० पांशुचामरे ॥
बर्बटः । पुं० राजमाषे ॥
बर्बटी । स्त्री० पण्ययोषायाम् ॥ व्रीहिभेदे ॥
बर्बरा । स्त्री० वृहन्मक्षिकायाम् । नीलायाम् ॥ पश्चान्तस्यादिवर्बराम् ॥
बर्ह. । पुं० न० मयूरपिच्छे ॥ दले । पत्रे ॥ परिवारे ॥ वर्हति । वृहत्वात् ॥ पचाद्यच् ॥ वर्हतेवा । वर्ह-हिंसायाम् । घञ् ॥
बल. । पुं० हलायुधे । बलदेवे ॥ दैत्यप्रभेदे ॥ मयपुत्रे ॥ अस्यस्थानमतल । यथा । प्रथमेविवरेविप्रअतलाख्ये मनोरमे । मयपुत्रोवलोनामवर्ततेऽखर्वगर्वकृत् । षण्णवत्योये बसृष्टामायासर्वार्थसाधिकाः । मायाविनोयास्सद्योधारयतिचकाश्चनेति० दे० भा० ॥ वायसे ॥ वरुणद्रुमे ॥ न० गंधरसे ॥ रूपे ॥ शौर्ये । स्थामनि । शुक्रे । शक्तौ । पराक्रमे ॥ बाहुवलमनोवलोपायवलबन्धुवलेषुचतुर्षु ॥ सामादिषु ॥ स्थौल्ये ॥ सैन्ये ॥ तत्तषड्विधम् । मौलभृत्यसुहृच्छ्रेणीद्विषदाटविकबलमितिभेदात् । तत्र० मित्राटवीबलचैवमौलंभृत्यबलतथा । सर्वमेतद्वलंयाह्यं वर्ज्यंयित्वाद्विषद्बलम् ॥ इतिनीतिः । देहसामर्थ्ये ॥ परपरिभव निमित्त शरीरगतसामर्थ्यविशेषे ॥ अवश्यमिदसाधयिष्यामीत्यायत्ते । स्वोचितेकार्येश्रमाभावप्रयोजकेदार्ढ्ये । कर्मेन्द्रियपाटवे ॥ स्वधर्मानुष्ठानायदेहेन्द्रियादिधारणसामर्थ्ये ॥ रसादिशुक्रपर्यन्तपुष्टधातुनिमित्तकम् । चेष्टासुपाटवंयत्तु बलतदभिधीयते ॥ शुक्रे ॥ त्रि० बलयुक्ते ॥ वलमस्यास्ति । अर्श आद्यच् । बलते० बलतिवा० बल्यतेवा० अनेन । बलसम्बरणे० बलप्राणनेवा । पचाद्यच्० कर्मणिघञ्वा । सञ्ज्ञापूर्वकत्वाद्वृद्ध्यभावः । पुसीति०घो वा ॥ बलतेऽनेन । खनोघचेतिघो वा ॥ पारिभाषिकबलानियथा । विद्याभिजनमित्राणिवृद्धिसत्त्वधनानि च । तपः सहायवीर्याणिदैवञ्चदशमबलम् ॥ अपिच । अवलस्यबलरा